गव मैट्रिकुलेशनसंस्कृत न्यायप्रथमपरीक्षापाठ्यग्रंथः ।



नमोऽनेकांताय ।

सनातनजैनग्रंथमाला ।

१०

श्रीधर्मभूषणयतिविरचिता

# न्यायदीपिका ।

काव्यतीर्थ-श्रीश्रीलाल व्याकरणशास्त्रिणा

संशोधिता ।

श्रीभारतीयजैनसिद्धांतप्रकाशिनीसंस्थाया महामंत्रिणा

पन्नालाल जैनेन

प्रकाशिता

काशीस्थ-चंद्रप्रभायंत्रालयस्य प्रबंधकेन श्रीगौरीशंकरलालेन

मुद्रापिता ।

वीरनिर्वाण संवत् २४४१ । खीष्टाब्द १९१५ ।

प्रथमावृत्तिः ] [ मूल्यमाणकचतुष्क

# लक्षणात्मकशब्दानामनुक्रमः ।

श्यत्वात् । अपरीक्षितस्य विवेचनायोगात् । लोकशास्त्रयोरपि तथैव वस्तुविवेचनप्रसिद्धे ।

तत्र विवेक्तव्यनाममात्रकथनमुद्देश । व्यतिकीर्णवस्तुव्यावृत्तिहेतु लक्षण । तदाहुर्वार्तिककारपादा —"परस्परव्यतिकरे सति येना-न्यत्व लक्ष्यते तल्लक्षण" इति ।

द्विविध लक्षणमात्मभूतमनात्मभूत चेति । तत्र यद्वस्तुस्वरूपानुप्रविष्ट तदात्मभूत । यथाग्नेरौष्ण्य । औष्ण्य ह्यग्ने स्वरूप तदग्निमबादिभ्यो व्यावर्तयति । तद्विपरीतमनात्मभूत यथा—दण्ड पुरुषस्य । दण्डिनमानयेत्युक्ते हि दण्ड पुरुषाननुप्रविष्ट एव पुरुष व्यावर्तयति । तद्भाष्य "तत्रात्मभूतमग्नेरौष्ण्यमनात्मभूत देवदत्तस्य दण्ड" इति ।

असाधारणधर्मवचन लक्षणमिति केचित् । तदनुपपन्न,— लक्ष्यधर्मिवचनस्य लक्षणधर्मवचनेन सामानाधिकरण्याभावप्रसगात् । दण्डादेरतद्धर्मस्यापि लक्षणत्वाच्च । किं च अव्याप्ताभिधानस्य लक्षणाभासस्यापि तथात्वात् ।

तथा हि—त्रयो लक्षणाभासभेदा । अव्याप्तमतिव्याप्तमसभवि चेति । तत्र लक्ष्यैकदेशवृत्त्यव्याप्त, यथा गो शाबलेयत्व । लक्ष्यालक्ष्यवृत्त्यतिव्याप्त, यथा तस्यैव पशुत्व । बाधितलक्ष्यवृत्त्यसभवि यथा नरस्य विषाणित्व । अत्र हि लक्ष्यैकदेशवर्तिन शाबलेयत्वस्या-साधारणधर्मत्वमस्ति न तु लक्ष्यभूतगोमात्रव्यावर्तकत्व । तस्माद्यथो-क्तमेव लक्षण । तस्य कथन लक्षणनिर्देश ॥

विरुद्धनानायुक्तिप्राबल्यदौर्बल्यावधारणाय प्रवर्तमानो विचार परीक्षा । सा खल्वेव चेदेव स्यादेव चेदेव स्यादित्येव प्रवर्तते । प्रमाणनययोरुद्देश सूत्र एव कृत । लक्षणमिदानीं निर्देष्टव्य परीक्षा च यथौचित्य भविष्यति । उद्देशानुसारेण लक्षणकथनमिति न्यायात्प्रधानत्वेन प्रथमोद्दिष्टस्य प्रमाणस्य तावल्लक्षणमनुशिष्यते,—

सम्यग्ज्ञानं प्रमाणं। अत्र प्रमाणं लक्ष्यं। सम्यग्ज्ञानत्वं तस्य लक्षणं। गोरिव सास्नादिमत्त्वं, असाधारणधर्मः। अत्र सम्यक्पदं संशयविपर्ययानध्यवसायनिरासाय क्रियते। अप्रमाणत्वादेतेषां ज्ञानानामिति। तथा हि-

विरुद्धानेककोटिस्पर्शि ज्ञानं संशयः। यथाऽयं स्थाणुर्वा पुरुषो वेति। स्थाणुपुरुषसाधारणोर्ध्वतादिदर्शनात्तद्विशेषस्य वक्रकोटरशिरःपाण्यादेः साधकप्रमाणस्याभावादनेककोट्यवलम्बित्वं ज्ञानस्य। विपरीतैककोटिनिश्चयो विपर्ययः। यथा शुक्तिकायामिदं रजतमिति ज्ञानं। अत्रापि सादृश्यादिनिमित्तवशाच्छुक्तिविपरीते रजते निश्चयः। किमित्यालोचनमात्रमनध्यवसायः। यथा पथि गच्छतस्तृणस्पर्शादिज्ञानं। इदं हि नानाकोट्यवलम्बनाभावान्न संशयः। विपरीतैककोटिनिश्चयाभावान्न विपर्ययः। इति पृथगेव। एतानि च स्वविषयप्रमितिजनकत्वाभावादप्रमाणानि ज्ञानानि भवन्ति, सम्यग्ज्ञानानि तु न भवन्तीति सम्यक्पदेन व्युदस्यते। ज्ञानपदेन प्रमातुः प्रमितेश्च व्यावृत्तिः। अस्ति हि निर्दोषत्वेन तत्रापि सम्यक्त्वं, न तु ज्ञानत्वं।

ननु प्रमितिकर्तुः प्रमातुर्ज्ञातृत्वमेव न ज्ञानत्वमिति, यद्यपि ज्ञानपदेन प्रमातुर्व्यावृत्तिस्तथापि प्रमितिर्न व्यावर्तयितुं शक्या, तस्या अपि सम्यग्ज्ञानत्वादिति चेद् भवेदेवं यदि भावसाधनमिह ज्ञानपदं। करणसाधनं खल्वेतद् ज्ञायतेऽनेनेति ज्ञानमिति। "करणाधारे चानट्" २।३।११२ इति करणेऽप्यनट्प्रत्ययानुशासनात्[1]। भावसाधनं तु ज्ञानपदं प्रमितिमाह। अन्यद्धि भावसाधनं करणसाधनं च। एवमेव प्रमाणपदमपि प्रमीयतेऽनेनेति करणसाधनं कर्तव्यं, अन्यथा सम्यग्ज्ञानपदेन सामानाधिकरण्याऽघटनात्। तेन प्रमितिक्रियां प्रति यत्करणं तत्प्रमाणमिति सिद्धं। तदुक्तं प्रमाणनिर्णये "इदमेव हि प्रमाणस्य प्रमा-

१ जैनेन्द्रव्याकरणस्य सूत्र।

णत्व यत्प्रमितिक्रिया प्रति साधकतमत्वेन करणत्व" इति ।

न चैवमप्यक्षलिङ्गादावतिव्याप्तिर्लक्षणस्य तत्रापि प्रमितिरूपं फलं प्रति करणत्वात् । दृश्यते हि—चक्षुषा प्रमीयते, धूमेन प्रमीयते, शब्देन प्रमीयते इति व्यवहार इति चेन्न, अक्षादे प्रमितिं प्रत्यसाधकतमत्वात् । तथा हि—

प्रमितिः प्रमाणस्य फलमिति न कस्यापि विप्रतिपत्तिः । सा चाज्ञाननिवृत्तिरूपा, तदुत्पत्तौ करणेन भवता सता तावदज्ञानविरोधिना भवितव्यं । न चाक्षादिकमज्ञानविरोधि, अचेतनत्वात् । तस्मादज्ञानविरोधिनश्चेतनधर्मस्यैव करणत्वमुचितं । लोकेऽप्यन्धकारविघटनाय तद्विरोधी प्रकाश एवोपास्यते, न पुनर्घटादि, तदविरोधित्वात् ।

किंचास्वसंविदितत्वादक्षादेरर्थप्रमितौ साधकतमत्वं स्वावभासनाशक्तस्य परावभासकत्वायोगात् । ज्ञानं तु स्वपरावभासकं प्रदीपादिवत्प्रतीतं । ततः स्थितं प्रमितावसाधकतमत्वादकरणमक्षादय इति । चक्षुषा प्रमीयते इत्यादिव्यवहारे पुनरुपचारः शरणं । उपचारप्रवृत्तौ च सहकारित्वं निबन्धनं । न हि सहकारित्वेन तत्साधकमिदं-मिति करणं नाम, साधकविशेषस्यातिशयवतः करणत्वात् । तदुक्तं जैनेन्द्रे "साधकतमं करणं" तस्मान्न लक्षणस्याक्षादावतिव्याप्तिः ।

अथापि धारावाहिकबुद्धिष्वतिव्याप्तिस्तासां सम्यग्ज्ञानत्वात् । न च तासामार्हतमते प्रामाण्याभ्युपगमः इति । उच्यते एकस्मिन्नेव घटे घटविषयाज्ञानविघटनार्थमाद्यं ज्ञानं प्रवृत्तं तेन घटप्रमितौ सिद्धायां पुनर्घटोऽयं घटोऽयमित्येवमुत्पन्नान्युत्तरोत्तरज्ञानानि खलु धारावाहिकज्ञानानि । न ह्येषां प्रमितिं प्रति साधकतमत्वं प्रथमज्ञानेनैव प्रमितेः सिद्धत्वात् । कथं तत्र लक्षणमतिव्याप्नोति तेषां गृहीतग्राहित्वात् ।

ननु घटे दृष्टे पुनरन्यासंगे पश्चाद् घट एव दृष्टे पश्चात्तम ज्ञानमप्र

मण प्राप्नोति धारावाहिकत्वादिति चेन्न दृष्टस्यापि मध्ये समारोपे सत्यदृष्टत्वात्। तदुक्तं "दृष्टोऽपि समारोपात्तादृक्" इति । एतेन निर्विकल्पके सत्तालोचनरूपे दर्शनेऽप्यतिव्याप्तिः परिहृता । तस्यानवसायरूपत्वेन प्रमितिं प्रति करणत्वाभावात्। निराकारस्य दर्शनस्य ज्ञानत्वाभावाच्च । "निराकारं दर्शनं साकारं ज्ञानं" इति प्रवचनात्। तस्मात् प्रमाणस्य सम्यग्ज्ञानमिति लक्षणं नातिव्याप्तं नाप्यव्याप्तं लक्ष्ययोः प्रत्यक्षपरोक्षयोर्व्याप्यवृत्तेः । नाप्यसंभवि लक्ष्यवृत्तेरबाधितत्वात् ।

किमिदं प्रमाणस्य प्रामाण्यं नाम ? प्रतिभातविषयाव्यभिचारित्वं । तस्योत्पत्तिः कथं ? स्वत एवेति मीमांसकाः । प्रामाण्यस्य स्वतः उत्पत्तिरिति ज्ञानसामान्यसामग्रीमात्रजन्यत्वमित्यर्थः । तदुक्तं, "ज्ञानोत्पादकहेत्वनतिरिक्तजन्यत्वमुत्पत्तौ स्वतस्त्वं" इति ।

न ते मीमांसका ज्ञानसामान्यसामग्र्याः संशयादावपि ज्ञानविशेषे सत्त्वात् । वयं तु ब्रूमहे–ज्ञानसामान्यसामग्र्याः साम्येऽपि संशयादिरप्रमाणं, सम्यग्ज्ञानं प्रमाणमिति विभागस्तावदनिबंधनो न भवति । ततः संशयादौ यथा हेत्वन्तरमप्रामाण्यं दोषादिकमंगीक्रियते तथा प्रमाणेऽपि प्रामाण्यनिबंधनमन्यदवश्यमभ्युपगंतव्य, अन्यथा प्रमाणाप्रमाणविभागानुपपत्तेः ।

एवमप्यप्रामाण्यं परतः प्रामाण्यं तु स्वत इति न वक्तव्यं, विपर्ययेऽपि समानत्वात्। शक्यं हि वक्तुमप्रामाण्यं स्वतः प्रामाण्यं तु परत इति । तस्मादप्रामाण्यवत्प्रामाण्यमपि परत एवोत्पद्यते । न हि पटसामान्यसामग्री रक्तपटे हेतुस्तद्वत् ज्ञानसामान्यसामग्री प्रमाणज्ञाने हेतुः, भिन्नकार्ययोर्भिन्नकारणप्रभवत्वावश्यंभावात् ।

कथं तस्य ज्ञप्तिः ? अभ्यस्ते विषये स्वतः, अनभ्यस्ते तु परतः । कोऽयमभ्यस्तो विषयः को वाऽनभ्यस्तः ? उच्यते परिचित-

स्वप्रमाणतदाकनज्ञादिरभ्यस्त , तद्व्यतिरिक्तोऽनभ्यस्त । किमिदं स्वत इति किं नाम परत इति ? ज्ञानज्ञापकादेव प्रमाणस्य ज्ञप्तिः स्वत इति । ततोऽतिरिक्ताद् ज्ञप्तिः परत इति ।

तत्र तावदभ्यस्तविषये जलमिदमिति ज्ञाने जाते ज्ञानस्वरूपज्ञप्तिसमय एव तद्गतं प्रामाण्यमपि ज्ञायत एव, अन्यथोत्तरक्षण एव निःशङ्कप्रवृत्तेरयोगात् । अस्ति हि जलज्ञानोत्तरक्षण एव निःशङ्का प्रवृत्तिः । अनभ्यस्त तु विषये जलज्ञाने जाते जलज्ञानं मम जातमिति ज्ञानस्वरूपनिर्णयेऽपि प्रामाण्यनिर्णयोऽन्यत एव । अन्यथोत्तरकाले संदेहानुपपत्तेः । अस्ति हि संदेहो जलज्ञानं मम जातं तत्किं जलमुत मरीचिकेति । ततः कमलपरिमलशिशिरमन्दमरुत्प्रचारप्रभृतिभिरवधारयति । प्रमाणं-प्राक्तनं जलज्ञानं, कमलपरिमलाद्यन्यथानुपपत्तेरिति ।

उत्पत्तिवत्प्रामाण्यस्य ज्ञप्तिरपि परत एवेति यौगाः । तत्र प्रामाण्यस्योत्पत्तिः परत इति युक्तं । ज्ञप्तिः पुनरभ्यस्तविषये स्वत एवेति स्थितत्वाज्ज्ञप्तिरपि परत एवेत्यवधारणानुपपत्तिः । ततो व्यवस्थितमेतत्प्रामाण्यमुत्पत्तौ परत एव, ज्ञप्तौ तु कदाचित् स्वतः कदाचित् परत इति । तदुक्तं प्रमाणपरीक्षायां ज्ञप्तिं प्रति—

प्रमाणाद्दिष्टसंसिद्धिरन्यथातिप्रसङ्गतः ।
प्रामाण्यं तु स्वतः सिद्धमभ्यासात्परतोऽन्यथा ॥१॥ इति ।

तदेवं सुव्यवस्थितेऽपि प्रमाणस्वरूपे दुरभिनिवेशवशंगतैः सौगतादिभिरपि कल्प्यत प्रमाणलक्षणं सुलक्षणमिति येषां भ्रमस्तान्नुगृह्णाम । तथा हि—"अविसंवादि ज्ञानं प्रमाणं" इति बौद्धाः । तदिदमसंभवादित्वमसंभावित्वाद्लक्षणं । बौद्धैर्हि प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवानुमन्यते । तदुक्तं न्यायविंदौ "द्विविधं सम्य

भ्रान्त प्रत्यक्षमनुमान च" इति। तत्र न तावत्प्रत्यक्षस्याविसंवादित्व, तस्य निर्विकल्पकत्वेन स्वविषयानिश्चायकस्य समारोपविरोधित्वाभावात्। नाप्यनुमानस्य, त्वन्मतानुसारेण तस्याप्यपरमार्थभूतसामान्यगोचरत्वादिति।

"अनधिगततथाभूतार्थनिश्चायक प्रमाण" इति भाट्टा। तदप्यव्याप्त, तैरेव प्रमाणत्वेनाभिमतेषु धारावाहिकज्ञानेष्वनधिगततथाभूतार्थनिश्चायकत्वाभावात्। उत्तरोत्तरक्षणविशेषविशिष्टार्थावभासकत्वेन तेषामनधिगतार्थनिश्चायकत्व नाशङ्कनीय, क्षणानामतिसूक्ष्माणामालक्षयितुमशक्यत्वात्।

"अनुभूति प्रमाण" इति प्राभाकरा। तदप्यसगत, अनुभूतिशब्दस्य भावसाधनत्वे करणलक्षणप्रमाणाव्याप्ते, करणसाधनत्वे तु भावलक्षणप्रमाणाव्याप्ते, करणभावयोरुभयोरपि त्वन्मते प्रामाण्याभ्युपगमात्। तदुक्त शालिकानाथेन "यदा भावसाधन तदा सविदेव प्रमाण करणसाधनत्वे त्वात्ममन सन्निकर्ष" इति।

"प्रमाकरण प्रमाण" इति नैयायिका। तदपि प्रमादकृत लक्षणमीश्वराख्ये तदङ्गीकृत एव प्रमाणे अव्याप्ते। अधिकरण हि महेश्वर प्रमाया न तु करण। न चायमनुक्तोपालम्भ "तन्मे प्रमाण शिव" इति यौगाग्रेसरेणोदयनेनाभिहितत्वाच्च। तत्परिहाराय केचन बालिशा 'साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्त प्रमाणमिति वर्णयन्ति। तथापि साधनाश्रयान्यतरपर्यालोचनाया साधनमाश्रयो वेति फलति। तथा च परस्पराव्याप्तिर्लक्षणस्य।

अन्यान्यपि पराभिमतानि प्रमाणस्य सामान्यलक्षणान्यलक्षणत्वादुपेक्ष्यन्ते। तस्मात्स्वपरावभासनसमर्थं सविकल्पमगृहीतग्राहक सम्यग्ज्ञानमेवाज्ञानमर्थं निवर्तयत्प्रमाणमित्यार्हत मत।

इति प्रथम प्रकाश।

चस्य। ततः सन्निकर्षाभावेऽपि साक्षात्कारिप्रमोत्पत्तेर्न सन्निकर्षरूपत्वमेव प्रत्यक्षस्य। न चाप्राप्यकारित्वं चक्षुषोऽप्रसिद्धम्, प्रत्यक्षतस्तथैव प्रतीतेः। ननु प्रत्यक्षागम्यामपि चक्षुषो विषयप्राप्तिमनुमानेन साधयिष्यामः परमाणुवत्। यथा प्रत्यक्षासिद्धोऽपि परमाणुः कार्यान्यथानुपपत्त्यानुमानेन साध्यते, तथा चक्षुः प्राप्तार्थप्रकाशकं बहिरिन्द्रियत्वात्त्वगिन्द्रियवदित्यनुमानात्प्राप्तिसिद्धिः। प्राप्तिरेव हि सन्निकर्षः। ततो न सन्निकर्षस्याव्याप्तिरिति चेन्न, अस्यानुमानाभासत्वात्।

तथाहि— चक्षुरिति कः पक्षोऽभिप्रेतः, किं लौकिकं चक्षुरुताऽलौकिकम्? आद्ये हेतोः कालात्ययापदिष्टत्वं गोलकाख्यस्य चक्षुषो विषयप्राप्तेः प्रत्यक्षबाधितत्वात्। द्वितीये त्वाश्रयासिद्धिः, अलौकिकस्य चक्षुषोऽद्याप्यसिद्धेः। शाखाचन्द्रमसोरेककालग्रहणान्यथानुपपत्त्या चक्षुरप्राप्यकारीति निर्णीयते। तदेवं सन्निकर्षाभावेऽपि चक्षुषा रूपप्रतीतिर्जायत इति सन्निकर्षोऽव्यापकत्वात् प्रत्यक्षस्य स्वरूपं न भवतीति स्थितम्।

अस्य च प्रमेयस्य प्रपञ्चः प्रमेयकमलमार्तण्डे सुलभः। संग्रहग्रन्थत्वात्तु नेह प्रतन्यते। एवं च न सौगताभिमतं निर्विकल्पकं प्रत्यक्षम्। नापि यौगाभिमत इन्द्रियार्थसन्निकर्षः। किं तर्हि? विशदप्रतिभासं ज्ञानमेव प्रत्यक्षं सिद्धम्।

तत्प्रत्यक्षं द्विविधं सांव्यवहारिकं पारमार्थिकं चेति। तत्र देशतो विशदं सांव्यवहारिकं प्रत्यक्षम्। यज्ज्ञानं देशतो विशदमीषन्निर्मलं तत्सांव्यवहारिकप्रत्यक्षमित्यर्थः। तच्चतुर्विधम्— अवग्रहः, ईहा, अवायो, धारणा चेति।

तत्रेन्द्रियार्थसमवधानसमनन्तरसमुत्थसत्तालोचनानन्तरभावी सत्तावान्तरजातिविशिष्टवस्तुग्राही ज्ञानविशेषोऽवग्रहः। यथाऽयं पुरुषः

इति । नायं संशयः, विपर्यासतरव्युदासेन स्वविषयनिश्चायकत्वात् । तद्विपरीतलक्षणो हि संशयः । यद्राजवार्तिकं "अनेकार्थानिश्चिता पर्युदासात्मकः संशयः, तद्विपरीतोऽवग्रहः" इति । भाष्यं च "संशयो हि निर्णयविरोधी न त्ववग्रहः" इति ।

अवग्रहगृहीतार्थसमुद्भूतसंशयनिरासाय यत्न ईहा । यथा पुरुष इति निश्चितेऽर्थे किमयं दाक्षिणात्य उतोदीच्य इति संशये सति दाक्षिणात्येन भवितव्यमिति तन्निरासायेहाख्यं ज्ञानं जायत इति । भाषादिविशेषनिर्ज्ञानाद्याथात्म्यावगमनमवायः । यथा दाक्षिणात्य एवायमिति । कालान्तराविस्मरणयोग्यतया तस्यैव ज्ञानं धारणा । यद्वशादुत्तरकालेऽपि स इत्येवं स्मरणं जायते ।

ननु पूर्वपूर्वज्ञानगृहीतार्थग्राहकत्वादेतेषां धारावाहिकवदप्रामाण्यप्रसङ्ग इति चेन्न विषयभेदेनागृहीतग्राहकत्वात् । तथाहि— योऽयमहस्य विषयो नासावीहाया । यः पुनरीहाया नायमवायस्य यश्चावायस्य नैव धारणाया इति परिशुद्धप्रतिभानां सुलभमेवैतत् । तदेतदवग्रहादिचतुष्टयमपि यदेन्द्रियेण जन्यते तदेन्द्रियप्रत्यक्षमित्युच्यते यदा पुनरनिन्द्रियेण तदानिन्द्रियप्रत्यक्षं गीयते ।

इन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि पञ्च । अनिन्द्रियं तु मनः । तद्द्वयनिमित्तकमिदं लोकसंव्यवहारे प्रत्यक्षमिति प्रसिद्धत्वात्सांव्यवहारिकप्रत्यक्षमुच्यते । तदुक्तं "इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकं" इदं चामुख्यप्रत्यक्षमुपचारसिद्धत्वात् । वस्तुतस्तु परोक्षमेव मतिज्ञानत्वात् । कुतो नु खल्वेतत् मतिज्ञानं परोक्षमित्युच्यते "आद्ये परोक्षं" इति सूत्रणात् । आद्ये मतिश्रुते परोक्षमिति हि सूत्रार्थः । उपचारमूलं पुनरत्र देशतो वैशद्यमिति कृतं विस्तरेण ।

सर्वतो विशदं पारमार्थिकं प्रत्यक्षं । यज्ज्ञानं साकल्येन स्पष्टं

तत्पारमार्थिकप्रत्यक्षं मुख्यप्रत्यक्षमिति यावत् । तद् द्विविधं सकलं विकलं च । तत्र कतिपयविषयं विकलं । तदपि द्विविधमवधिज्ञानं मनःपर्ययज्ञानं चेति । तत्रावधिज्ञानावरणक्षयोपशमाद्वीर्यान्तरायक्षयोपशमसहकृताज्जातं रूपिद्रव्यमात्रविषयमवधिज्ञानं । मनःपर्ययज्ञानावरणवीर्यान्तरायक्षयोपशमसमुत्थं परमनोगतार्थविषयं मनःपर्ययज्ञानं । मतिज्ञानस्येवावधिमनःपर्ययोरवान्तरभेदास्तत्त्वार्थवार्तिकराजवार्तिकश्लोकवार्तिकभाष्याभ्यामवगन्तव्या ।

सर्वद्रव्यपर्यायविषयं सकलं । तच्च घातिसंघातनिरवशेषघातनात्समुन्मीलितं केवलज्ञानमेव "सर्वद्रव्यपर्यायेषु केवलस्य" इत्याज्ञापितत्वात् । तदेवमवधिमनःपर्ययकेवलज्ञानत्रयं सर्वतो वैशद्यात्पारमार्थिकं प्रत्यक्षं । सर्वतो वैशद्यं चात्ममात्रसापेक्षत्वात् ।

ननु अस्तु केवलस्य पारमार्थिकत्वमवधिमनःपर्यययोस्तु न युक्तं विकलत्वादिति चेन्न साकल्यवैकल्ययोरत्र विषयोपाधिकत्वात् । तथाहि, सर्वद्रव्यपर्यायविषयमिति केवलं सकलं । अवधिमनःपर्ययौ तु कतिपयविषयत्वाद्विकलौ । नैतावता तयोः पारमार्थिकत्वच्युतिः, केवलवत्तयोरपि वैशद्यं स्वविषये साकल्येन समस्तीति तावपि पारमार्थिकावेव ।

कश्चिदाह "अक्षं नाम चक्षुरादिकमिन्द्रियं तत्प्रतीत्य यदुत्पद्यते तदेव प्रत्यक्षमुचितं नान्यत्" इति तदप्यसत् । आत्ममात्रसापेक्षाणामवधिमनःपर्ययकेवलानामिन्द्रियनिरपेक्षाणामपि प्रत्यक्षत्वाविरोधात् । स्पष्टत्वमेव हि प्रत्यक्षत्वप्रयोजकं नेन्द्रियजन्यत्वं । अत एव हि मतिश्रुतावधिमनःपर्ययकेवलानां ज्ञानत्वेन प्रतिपन्नानां मध्ये "आद्ये परोक्षं" "प्रत्यक्षमन्यत्" इत्याद्ययोर्मतिश्रुतयोः परोक्षत्वकथनमन्येषां त्ववधिमनःपर्ययकेवलानां प्रत्यक्षत्ववाचोयुक्तिः ।

कथं पुनरेतेषां प्रत्यक्षशब्दवाच्यत्वमिति चेत् रूढित इति ब्रूमः। अथवा अक्ष्णोति व्याप्नोति जानातीत्यक्ष आत्मा तन्मात्रापेक्षोत्पत्तिकं प्रत्यक्षमिति किमनुपपन्नं? तर्हि इन्द्रियजन्यमप्रत्यक्षं प्राप्तमिति चेत् हंत निस्सरणशालेव वत्सस्य। अतोचाम खल्वपि व्यावहारिकं प्रत्यक्षमिन्द्रियजज्ञानस्य ततस्तस्याप्रत्यक्षत्वं कामं प्राप्नोतु, का नो हानिः? एतेनाक्षेभ्यः परावृत्तं परोक्षमित्यपि प्रतिविहितं। अवैशद्यस्यैव परोक्षलक्षणत्वात्।

स्यादेतत् 'अतीन्द्रियं प्रत्यक्षमस्तीत्यतिसाहसमसम्भावितत्वात्। यदसम्भावितमपि कल्प्येत गगनकुसुमादिकमपि कल्प्यं स्यात्'। न स्याद्गगनकुसुमादिरप्रसिद्धत्वात् अतीन्द्रियप्रत्यक्षस्य तु प्रमाणसिद्धत्वात्। तथा हि— केवलज्ञानं तावत्कैश्चिज्ज्ञाना कपिलसुगतादीनामसम्भवदप्यर्हतः सम्भवत्येव। सर्वज्ञो हि स भगवान्।

ननु सर्वज्ञत्वमेवाप्रसिद्धं किमु त्वे सर्वज्ञोऽर्हन्निति क्वचिदप्यप्रसिद्धस्य विषयविशेषे व्यवस्थापयितुमशक्तेरिति चेन्न, सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षा अनुमेयत्वादग्न्यादिवदित्यनुमानात्सर्वज्ञत्वसिद्धेः।

तदुक्तं स्वामिभिर्महाभाष्यस्यादावाप्तमीमांसाप्रस्तावे—

"सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा।<br>अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः" ॥१॥

सूक्ष्माः स्वभावविप्रकृष्टाः परमाण्वादयः, अन्तरिताः कालविप्रकृष्टा रामादयः, दूरार्थाः देशविप्रकृष्टा मेर्वादयः एते स्वभावकालदेशविप्रकृष्टाः पदार्था धर्मित्वेन विवक्षितास्तेषां कस्यचित्प्रत्यक्षत्वं साध्यं। इह प्रत्यक्षत्वं प्रत्यक्षज्ञानविषयत्वं। विषयिधर्मस्य विषयेऽप्युपचारोपपत्तेः। अनुमेयत्वादिति हेतुः, अग्न्यादिर्दृष्टान्तः। अग्न्यादावनुमेयत्वं कस्यचित्प्रत्यक्षत्वेन सहोपलभ्य परमाण्वादावपि कस्यचित्प्रत्यक्षत्वं साधयत्येव।

न चाणाद्यनुमेयत्वमसिद्धं, सर्वेषामप्यनुमेयमात्रे विवादाभावात्। अत एव सूक्ष्मादीनां प्रत्यक्षत्वसिद्धिद्वारेण कस्यचिदशेषविषयप्रत्यक्षज्ञानं। तत्पुनरतीन्द्रियमिति कथं? इत्थं-यदि तज्ज्ञानमैन्द्रियिकं स्यादशेषविषयं न स्यात्, इन्द्रियाणां स्वयोग्यविषय एव ज्ञानजनकत्वशक्तेः सूक्ष्मादीनां च तदयोग्यत्वादिति। तस्मात्सिद्धं तदशेषविषयं ज्ञानमतीन्द्रियमेवेति। अस्मिन्नर्थे सर्वेषां सर्वज्ञवादिनां न विवादः यद्वाह्या अप्याहुः "अदृष्टादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्" इति।

नन्वस्त्वेवमशेषविषयसाक्षात्कारित्वलक्षणमतीन्द्रियप्रत्यक्षज्ञानं, सत्वार्हत इति कथं? कस्यचिदिति सत्त्रान्न सामान्यज्ञापकादिति चेत्, सत्यं, प्रकृतानुमानात्सामान्यतः सर्वज्ञत्वसिद्धिः। अर्हत एवेति पुनरनुमानान्तरात्। तथा हि- अर्हन् सर्वज्ञो भवितुमर्हति निर्दोषत्वात्। यस्तु न सर्वज्ञो नासौ निर्दोषः, यथा रथ्यापुरुष इति केवलव्यतिरेकिलिंगकमनुमानं।

आवरणरागादयो दोषास्तेभ्यो निष्क्रान्तत्वं हि निर्दोषत्वं। तच्चासर्वज्ञमतरेण नोपपद्यते किंचिज्ज्ञस्यावरणादि दोषरहितत्वविरोधात्। ततो निर्दोषत्वमर्हति विद्यमानं सार्वज्ञ्यं साधयत्येव। निर्दोषत्वं पुनरर्हत्परमेष्ठिनि युक्तिशास्त्राविरोधिवाक्त्वात्सिध्यति। युक्तिशास्त्राविरोधिवाक्त्वं च तदभिमतस्य मुक्तिसंसारतत्कारणतत्त्वस्यानेकधर्मात्मकचेतनाचेतनात्मकतत्त्वस्य प्रमाणाबाधितत्वात्सुव्यवस्थितमेव।

एवमपि सर्वज्ञत्वमर्हत एवेति कथं कपिलादीनामपि सम्भावनानरादिति चेदुच्यते-कपिलादयो न सर्वज्ञाः सदोषत्वात्, सदोषत्वं तेषां न्यायागमविरुद्धभाषित्वात्। तच्च तदभिमतमुक्त्यादितत्त्वस्य सर्वथैकान्तस्य च प्रमाणबाधितत्वात्। तदुक्तं स्वामिभिरेव—

"स त्वमेवासि निर्दोषो युक्तिशास्त्राविरोधिवाक्।

अविरोधो यदिष्टं ते प्रसिद्धेन न बाध्यते ॥ १ ॥
त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम्।
आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥ २ ॥"

इति कारिकाद्वयेनैतयोरेव परात्माभिमततत्त्वबाधाबाधयोः समर्थनं प्रस्तुत्य भावैकान्ते इत्युपक्रम्य स्याद्वादः संस्थापित इत्यतः आप्तमीमांसासन्दर्भे इति कृतं विस्तरेण। तदेवमतीन्द्रियं केवलज्ञान-मर्हत एवेति सिद्धं। तद्वचनप्रामाण्याच्चावधिमनःपर्ययोरतीन्द्रिययोः सिद्धिरित्यतीन्द्रियप्रत्यक्षमनवद्यं। ततः स्थितं सांव्यवहारिकं पारमार्थिकं चेति द्विविधं प्रत्यक्षमिति।

इति द्वितीयः प्रकाशः।

---

## अथ तृतीयःप्रकाशः।

अथ परोक्षप्रमाणनिरूपणं प्रक्रम्यते। अविशदप्रतिभासं परोक्षं अत्र परोक्षं लक्ष्यं, अविशदप्रतिभासत्वं लक्षणं। यस्य ज्ञानस्य प्रतिभासो विशदो न भवति तत्परोक्षप्रमाणमित्यर्थः। वैशद्यमुक्तलक्षणं। ततोऽन्यदवैशद्यमस्पष्टत्वं। तदप्यनुभवसिद्धमेव।

" सामान्यमात्रविषयत्वं परोक्षप्रमाणमिति केचित्, तन्न प्रत्यक्षस्येव परोक्षस्यापि सामान्यविशेषात्मकवस्तुविषयत्वेन तस्य लक्षणस्यासम्भवित्वात्। तथा हि। घटादिविषयेषु प्रवर्तमानं प्रत्यक्षप्रमाणं तद्गतं सामान्याकारं घटत्वादिकं व्यावृत्ताकारं च व्यक्तिरूपं युगपदेव प्रकाशयदुपलब्धं तथा परोक्षमपि। इति न सामान्यमात्रविषयत्वं परोक्षलक्षणं। अपि त्ववैशद्यमेव।

सामान्यविशेषयोरेकतरविषयत्वे तु प्रमाणत्वस्यैवानुपपत्तेः, सर्वप्रमाणानां सामान्यविशेषात्मकवस्तुविषयत्वाभ्यनुज्ञानात्। तदुक्तं

"सामान्यविशेषात्मा तदर्थो विषय" इति । तस्मात्सुष्ठूक्त 'अविशदावभासन परोक्ष' इति ।

तत्पञ्चविध—स्मृति प्रत्यभिज्ञान तर्कोऽनुमानमागमश्चेति । पञ्चविधत्वमस्य परोक्षस्य प्रत्ययान्तरसापेक्षत्वेनोत्पत्तेः । तद्यथा, स्मरणस्य प्राक्तनानुभवापेक्षा, प्रत्यभिज्ञानस्य स्मरणानुभवापेक्षा, तर्कस्यानुभवस्मरणप्रत्यभिज्ञानापेक्षा, अनुमानस्य च लिंगदर्शनाद्यपेक्षा, आगमस्य शब्दश्रवणसकेतग्रहणाद्यपेक्षा । प्रत्यक्ष तु न तथा स्वातन्त्र्येणैवोत्पत्ते । स्मरणादीना प्रत्ययान्तरापेक्षा तु तत्र तत्र निवेदयिष्यते ।

तत्र का नाम स्मृति । तदित्याकारा प्रागनुभूतवस्तुविषया स्मृति । यथा स देवदत्त इति । अत्र हि प्रागनुभूत एव देवदत्तस्तत्तया प्रतीयते, तस्मादेषा प्रतीतिस्तत्तोल्लेखिन्यनुभूतविषया च, अननुभूते विषये तदनुत्पत्ते । तन्मूल चानुभवो धारणारूप एव । अवग्रहाद्यनुभूतेऽपि धारणाया अभावे स्मृतिजननायोगात् । धारणा हि तथा आत्मान संस्करोति यथासावात्मा कालान्तरेऽपि तस्मिन् विषये ज्ञानमुत्पादयति । तदेतद्धारणाविषये समुत्पन्न तत्तोल्लेखिज्ञान स्मृतिरिति सिद्ध ।

नन्वेव धारणागृहीत एव स्मरणस्योत्पत्तौ गृहीतग्राहित्वादप्रामाण्य प्रसज्यत इति चेन्न विषयविशेषसद्भावादीहादिवत् । यथा हि—अवग्रहादिगृहीतविषयाणामीहादीना विषयविशेषसद्भावात्स्वविषयसमारोपव्यवच्छेदकत्वेन प्रामाण्य तथा स्मरणस्यापि धारणागृहीतविषयप्रवृत्तावपि प्रामाण्यमव । धारणाया हीदन्तावच्छिन्नो विषय, स्मरणस्य तु तत्तावच्छिन्न । तथा च स्मरण स्वविषयास्मरणादिसमारोपव्यवच्छेदकत्वात्प्रमाणमेव । तदुक्त प्रमेयकमलमार्तण्डे "विस्मरणसंशयविपर्यासलक्षण समारोपोऽस्ति तन्निराकरणाच्चास्या स्मृते

प्रामाण्य" इति। यदि चानुभूते प्रवृत्तमित्येतावता स्मरणमप्रमाणं स्यात्तर्हि अनुमितेऽग्नौ पश्चात्प्रवृत्तं प्रत्यक्षमप्यप्रमाणं स्यात्।

अविसंवादित्वाच्च प्रमाणं स्मृतिः प्रत्यक्षादिवत्। न हि स्मृत्वा निक्षेपादिषु प्रवर्तमानस्य विषयविसंवादोऽस्ति। यत्र त्वस्ति विसंवादस्तत्र स्मरणस्याभासत्वं प्रत्यक्षाभासवत्। तदेवं स्मरणाख्यं पृथक् प्रमाणमस्तीति सिद्धं।

अनुभवस्मृतिहेतुकं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानं। इदन्ताख्यं ज्ञानमनुभवः। तत्ताकारं ज्ञानं स्मरणं। तदुभयसमुत्थं पूर्वोत्तरैक्यसादृश्यवैलक्षण्यादिविषयं यत्सङ्कलनरूपं ज्ञानं जायते तत्प्रत्यभिज्ञानमिति ज्ञातव्यं। यथा स एवायं जिनदत्तो, गोसदृशो गवयो, गोविलक्षणो महिष इत्यादि।

अत्र हि पूर्वस्मिन्नुदाहरणे जिनदत्तस्य पूर्वोत्तरदशाद्वयव्यापकमेकत्वं प्रत्यभिज्ञानस्य विषयः, तदिदमेकत्वप्रत्यभिज्ञानं। द्वितीये तु पूर्वानुभूतगोप्रतियोगिकं गवयनिष्ठं सादृश्यं। तदिदं सादृश्यप्रत्यभिज्ञानं। तृतीये तु पुनः प्रागनुभूतगोप्रतियोगिकं महिषनिष्ठं वैसादृश्यं। तदिदं वैसादृश्यप्रत्यभिज्ञानं। एवमन्येऽपि प्रत्यभिज्ञानभेदा यथाप्रतीति स्वयमुत्प्रेक्ष्याः। अत्र सर्वत्रापि अनुभवस्मृतिसापेक्षत्वात्तद्धेतुकत्वं।

केचिदाहुः "अनुभवस्मृतिव्यतिरिक्तं प्रत्यभिज्ञानं नास्ति" इति तदसत्, अनुभवस्य वर्तमानकालवर्तिविवर्तमात्रप्रकाशकत्वं, स्मृतेश्चातीतविवर्तद्योतकत्वमिति तावद्वस्तुगतिः। कथं नाम तयोरतीतवर्तमानकालसङ्कलितैक्यसादृश्यादिविषयावगाहित्वं। तस्मादस्ति स्मृत्यनुभवातिरिक्तं तदनन्तरभावि सङ्कलनज्ञानं। तदेव प्रत्यभिज्ञानं।

अपरे त्वेकत्वप्रत्यभिज्ञानमभ्युपगम्यापि तस्य प्रत्यक्षेऽन्तर्भावं कल्पयन्ति। तद्यथा, यदिन्द्रियान्वयव्यतिरेकानुविधायि तत्प्रत्यक्षमिति तावत्

त्प्रसिद्ध । इन्द्रियान्वयव्यतिरेकानुविधायि चेद् प्रत्यभिज्ञानं तस्मात् प्रत्यक्षमिति । तन्न, इन्द्रियाणां वर्तमानदशापरामर्शमात्रोपक्षीणत्वेन वर्तमानातीतदशाव्याप्येकत्वावगाहित्वायोगात् । न ह्यविषयप्रवृत्तिरिन्द्रियाणां युक्तिमती, चक्षुषा रसादेरपि प्रतीतिप्रसङ्गात् ।

ननु सत्यमेतदिन्द्रियाणां वर्तमानदशावगाहित्वमेवेति, तथापि तानि सहकारिसमवधानसामर्थ्याद्दशाद्वयव्याप्येकत्वेऽपि प्रवर्तन्ते जनयन्तु, अञ्जनसंस्कृतं चक्षुरिव व्यवहितार्थ । नहि चक्षुषो व्यवहितार्थप्रकाशनसामर्थ्यमस्ति, अञ्जनसंस्कारवशात्तु तथाऽप्युपलम्भः । तद्वदेव स्मरणादिसहकृतानीन्द्रियाण्यत्र दशाद्वयव्यापकमेकत्वं प्रत्याययिष्यन्तीति किं प्रमाणान्तरकल्पनाप्रयासेनेति, तदप्यसत् ।

सहकारिसहस्रसमवधानेऽप्यविषये प्रवृत्त्ययोगात् । चक्षुषो हि अञ्जनसंस्कारादि सहकारी स्वविषये रूपादावेव प्रवर्तको न स्वाविषये रसादौ । अविषयश्च पूर्वोत्तरावस्थाव्यापकमेकत्वमिन्द्रियाणां । तस्माच्च तद्व्यापनाय प्रमाणान्तरमन्वेषणीयमेव । सर्वत्रापि विषयविशेषद्वारेण प्रमाणभेदव्यवस्थापनात् ।

किंचास्पष्टत्वेन तदेवेदमिति प्रतिपत्तिः, तस्मादपि न तस्याः प्रत्यक्षेऽन्तर्भाव इति । अतएव चैतदत्र विशेष चक्षुरादेरैक्यप्रतीतिजननसामर्थ्यं नास्तीति । अन्यथा लिङ्गदर्शनव्याप्तिस्मरणादिसहकृतं चक्षुरादिकमेव वह्न्यादिलिङ्गिज्ञानं जनयदिति नानुमानमपि पृथक् प्रमाणं स्यात् । स्वविषयमात्र एव चरितार्थत्वाच्चक्षुरादिकमिन्द्रियं न लिङ्गिनि प्रवर्तितुं प्रगल्भमिति चेत् तर्ह्येकत्वे किमपराद्धं? तन्न स्थितं प्रत्यभिज्ञानस्य पृथक्प्रमाणत्वमिति ।

सादृश्यप्रत्यभिज्ञानमुपमानाख्यं पृथक् प्रमाणमिति कश्चित् कथयति तदसत्, स्मृत्यनुभवपूर्वकसंकलनज्ञानत्वेन प्रत्यभिज्ञानतानातिवृत्ते

अन्यथा गोविलक्षणो महिष इत्यादिविसदृशत्वप्रत्ययस्य इदमस्माद्दूर-मित्यादेश्च प्रत्ययस्य सप्रतियोगिकस्य पृथक्प्रमाणत्वं स्यात्। ततो वैसा-दृश्यादिप्रत्ययवत् सादृश्यप्रत्ययस्यापि प्रत्यभिज्ञानलक्षणाक्रान्तत्वेन प्रत्यभिज्ञानत्वमेवेति प्रामाणिकपद्धतिः।

अस्तु प्रत्यभिज्ञानं, कस्तर्हि तर्कः? व्याप्तिज्ञानं तर्कः। साध्य-साधनयोर्गम्यगमकभावप्रयोजको व्यभिचारगन्धासहिष्णुः संबन्धवि-शेषो व्याप्तिरविनाभाव इति च व्यपदिश्यते। तत्सामर्थ्यात्खल्वग्न्या-दिं धूमादिरेव गमयति न तु घटादिस्तदभावात्। तस्याश्चाविना-भावापरनाम्न्या व्याप्तेः प्रमितौ यत्साधकतमं तदिदं तर्काख्यं पृथक् प्रमाणमित्यर्थः। तदुक्तं श्लोकवार्तिकभाष्ये "साध्यसाधनसंबन्धाज्ञान-निवृत्तिरूपे हि फले साधकतमस्तर्कः" इति। ऊह इति तर्कस्यैव व्यप-देशान्तरं स च तर्कस्तां व्याप्तिं सकलदेशकालोपसंहारेण विषयीकरोति।

किमस्योदाहरणम्? उच्यते, यत्र यत्र धूमवत्त्वं तत्र तत्राग्निमत्त्व-मिति। अत्र हि धूमे सति भूयोऽनुपलम्भे 'सर्वत्र सर्वदा धूमोऽग्निं न व्यभिचरति' एवं सर्वोपसंहारेणाविनाभावविज्ञानं पश्चादुत्पन्नं तर्काख्यं प्रत्यक्षादेः पृथगेव। प्रत्यक्षस्य संनिहितदेश एव धूमाग्निसंबन्धप्रकाश-नान्न व्याप्तिप्रकाशकत्वम्। सर्वोपसंहारवती हि व्याप्तिः।

ननु यद्यपि प्रत्यक्षमात्रं व्याप्तिविषयीकरणे शक्तं न भवति तथापि विशिष्टं प्रत्यक्षं तत्र शक्तमेव। तथा हि महानसादौ तावत्प्रथमं धूमाग्न्योर्दर्शनमेकं प्रत्यक्षम्। तदनन्तरं भूयो भूयः प्रत्यक्षाणि प्रवर्तन्ते। तानि च प्रत्यक्षाणि न सर्वाणि व्याप्तिविषयीकरणे समर्थानि, अपि तु पूर्वपूर्वानुभूतधूमाग्निस्मरणतत्सजातीयत्वानुसंधानरूपप्रत्यभिज्ञा-नसहकृतं कोपि प्रत्यक्षविशेषो व्याप्तिं गृह्णाति। तथा च, स्मरण-प्रत्यभिज्ञानसहकृते प्रत्यक्षविशेषे व्याप्तिविषयीकरणसमर्थे किं तर्का

रयेन पृथक्प्रमाणेनेति केचित्, तेऽपि न्यायमार्गानभिज्ञाः "सहकारिसहस्रसमवधानेऽप्यविषये प्रवृत्तेरघटनात्" इत्युक्तत्वात् । तस्मात्प्रत्यक्षेण व्याप्तिग्रहणमसमञ्जसम् । इदं समञ्जसं—स्मरण प्रत्यभिज्ञान भूयोदर्शनरूपं प्रत्यक्षं च मिलित्वा तादृशमेकं ज्ञानं जनयति यद्व्याप्तिग्रहणसमर्थमिति तर्कश्च स एव । अनुमानादिकं तु व्याप्तिग्रहणं प्रत्यसमर्थमेव ।

यौगास्तु प्रत्यक्षपृष्ठभावी विकल्पो व्याप्तिं गृह्णातीति मन्यते । त एवं प्रष्टव्याः, स हि विकल्पः किमप्रमाणमुत प्रमाणमिति । यद्यप्रमाणं कथं नाम तद्गृहीतायां व्याप्तौ समाश्वासः ? अथ प्रमाणं किं प्रत्यक्षमथवाऽनुमानं ? न तावत्प्रत्यक्षमस्पष्टप्रतिभासत्वात्, नाप्यनुमानं लिङ्गदर्शनाद्यनपेक्षत्वात् । ताभ्यामन्यदेव किंचित्प्रमाणमिति चेदागतस्तर्हि तर्कः । तदेवं तर्कस्य प्रमाणं निर्णीतं । इदानीमनुमानमनुवर्ण्यते ।

साधनात्साध्यविज्ञानमनुमानं । इहानुमानमिति लक्ष्यनिर्देशः, साधनात्साध्यविज्ञानमिति लक्षणकथनं । साधनाद्धूमादेर्लिङ्गात्साध्ये वह्न्यादौ लिङ्गिनि यद्विज्ञानं जायते तदनुमानम् । तस्याग्न्याद्यव्युत्पत्तिनिवृत्तिरूपत्वात् । न पुनः साधनज्ञानमनुमानं, तस्य साधनगोचरत्वात्, साध्यज्ञाने तेन साध्याज्ञाननिवर्त्तकत्वायोगात् ।

तेन यदुक्तं नैयायिकैः "लिङ्गपरामर्शोऽनुमानं" इति अनुमानलक्षणं तदविज्ञाननिलसितमिति निवेदितं भवति । यत्त्वनुमानप्रमाणस्वरूपलाभे व्याप्तिस्मरणसहकृतं लिङ्गपरामर्शं करणमिति मन्यते । स्मृत्यादिस्वरूपलाभे अनुभवादिवत् । तथा हि, धारणाख्योऽनुभवः स्मृतौ हेतुः । तादात्विकानुभवस्मृती प्रत्यभिज्ञाने, स्मृतिप्रत्यभिज्ञानानुभवाः साध्यसाधनविषयास्तर्के । तद्वल्लिङ्गज्ञानं व्याप्तिस्मरणादिसहकृतमनुमानोत्पत्तौ नियतमित्येतत्सुसंगतमेव ।

ननु भवतां मते साधनमेवानुमाने हेतुर्न तु साधनज्ञानं, साधनात्साध्यविज्ञानमनुमानमिति वचनादिति चेन्न, साधनादित्यत्र निश्चयपथप्राप्ताद्धूमादेरिति विवक्षणात्। अनिश्चयपथप्राप्तस्य धूमादेः साधनत्वस्यैवाघटनात्। तथा चोक्तं श्लोकवार्तिके "साधनात्साध्यविज्ञानमनुमानं विदुर्बुधा" इति। साधनाज्ज्ञायमानाद्धूमादेः, साध्येऽग्न्यादौ लिंगिनि यद्विज्ञानं तदनुमानं। अज्ञायमानस्य तस्य साध्यज्ञानजनकत्वे हि सुप्तादीनामगृहीतधूमादीनामप्यग्न्यादिज्ञानोत्पत्तिप्रसंगः। तस्माज्ज्ञायमानलिंगकारणकस्य साध्यज्ञानस्यैव साध्याव्युत्पत्तिनिराकारकत्वेनानुमानत्वं। न तु लिंगपरामर्शादेरिति बुधाः प्रामाणिका विदुरिति वार्तिकार्थः।

किं तत्साधनं यद्धेतुकं साध्यज्ञानमनुमानमिति चेदुच्यते निश्चितसाध्यान्यथानुपपत्तिकं साधनं। यस्य साध्याभावासंभवनियमरूपा व्याप्त्यविनाभावाद्यपरपर्याया साध्यान्यथानुपपत्तिस्तर्काख्येन प्रमाणेन निर्णीता तत्साधनमित्यर्थः। तदुक्तं कुमारनंदिभट्टारकैः "अन्यथानुपपत्त्येकलक्षणं लिंगमभ्यते" इति।

किं तत्साध्यं यदविनाभावः साधनलक्षणं? उच्यते। शक्यमभिप्रेतमप्रसिद्धं साध्यं। यत्प्रत्यक्षादिप्रमाणाबाधितत्वेन साधयितुं शक्यं, वाद्यभिमतत्वेनाभिप्रेतं, संदेहाद्याक्रांतत्वेनाप्रसिद्धं, तदेव साध्यं। अशक्यस्य साध्यत्वे वह्न्यनुष्णत्वादेरपि साध्यत्वप्रसंगात्। प्रसिद्धस्य साध्यत्वे पुनरनुमानवैयर्थ्यात्। तदुक्तं न्यायविनिश्चये—

"साध्यं शक्यमभिप्रेतमप्रसिद्धं ततोऽपरं।
साध्याभासं विरुद्धादि साधनाविषयत्वतः॥ इति।

अयमर्थः यच्छक्यमभिप्रेतमप्रसिद्धं तत्साध्यं। ततोऽपरं साध्याभासं। किं तत्? विरुद्धादि। विरुद्धं प्रत्यक्षादिबाधितं। आदिशब्दा

दनभिप्रेतं प्रसिद्धं चेति । कुत एतत् ? साधनाविषयत्वेन साधनेन गोचरीकर्तुमशक्यत्वात् । इष्टत्वं वक्तुरभिप्रायेण, तदभिप्राय साफल्यं तु स्याद्वादनियमविनिर्णय । सधानसाध्यद्वयमधिकृत्य श्लोकवार्तिकं च —

"अन्यथानुपपत्त्येकलक्षणं तत्र साधनं ।
साध्यं शक्यमभिप्रेतमप्रसिद्धमुदाहृतं" ॥ इति

तदेवमविनाभावैकलक्षणात् साधनाच्छक्याभिप्रेताप्रसिद्धरूपस्य साध्यस्य ज्ञानमनुमानमिति सिद्धं ।

तदनुमानं द्विविधं स्वार्थं परार्थं च । तत्र स्वयमेव निश्चितात्साधनात्साध्यज्ञानं स्वार्थानुमानं । परोपदेशमनपेक्ष्य स्वयमेव निश्चितात्प्राक्तर्कानुभूतव्याप्तिस्मरणसहकृताद्धूमादेः साधनादुत्पन्नं पर्वतादौ धर्मिण्यग्न्यादेः साध्यस्य ज्ञानं स्वार्थानुमानमित्यर्थः । यथा पर्वतोऽयमग्निमान् धूमवत्त्वादिति । अयं हि स्वार्थानुमानस्य ज्ञानरूपस्यापि शब्देनोल्लेखः, यथायं घट इति शब्देन प्रत्यक्षस्य पर्वतोऽयमग्निमान् धूमवत्त्वादित्यनेन प्रकारेण प्रमाता जानातीति स्वार्थानुमानस्थितिरवगन्तव्या ।

अस्य च स्वार्थानुमानस्य त्रीण्यङ्गानि—धर्मी, साध्यं, साधनं च । तत्र साधनं गमकत्वेनाङ्गं । साध्यं तु गम्यत्वेन । धर्मी पुनः साध्यधर्माधारत्वेन । आधारविशेषनिष्ठतया हि साध्यसिद्धिरनुमानप्रयोजनं, धर्ममात्रस्य तु व्याप्तिनिश्चयकाल एव सिद्धत्वात्, यत्र यत्र धूमवत्त्वं तत्र तत्राग्निमत्त्वमिति ।

पक्षो हेतुरित्यङ्गद्वयं स्वार्थानुमानस्य, साध्यधर्मविशिष्टस्य धर्मिणः पक्षत्वात् । तथा च स्वार्थानुमानस्य धर्मिसाध्यसाधनभेदात्त्रीण्यङ्गानि पक्षसाधनभेदादङ्गद्वयं चेति सिद्धं, विवक्षाया वैचित्र्यात् । पूर्वत्र हि धर्मिधर्मभेदविवक्षा । उत्तरत्र तु तत्समुदायविवक्षा । स एव धर्मित्वेनाभिमतः प्रसिद्ध एव । तदुक्तमभियुक्तैः "प्रसिद्धो धर्मी" इति ।

प्रसिद्धत्वं च धर्मिणः क्वचित्प्रमाणात्क्वचिद्विकल्पात्क्वचित्प्रमाणविकल्पाभ्याम्। तत्र प्रत्यक्षाद्यन्यतमावधृतत्वं प्रमाणप्रसिद्धत्वम्। अनिश्चितप्रामाण्याप्रामाण्यप्रत्ययगोचरत्वं विकल्पप्रसिद्धत्वम्। तद्द्वयविषयत्वं प्रमाणविकल्पप्रसिद्धत्वम्।

तत्र प्रमाणसिद्धो धर्मी यथा धूमवत्त्वादग्निमत्त्वे साध्ये पर्वतः। स हि प्रत्यक्षेणानुभूयते। विकल्पसिद्धो यथा, सर्वज्ञोऽस्ति सुनिश्चितासम्भवद्बाधकप्रमाणत्वादित्यस्तित्वे साध्ये सर्वज्ञः। अथवा खरविषाणं नास्तीति नास्तित्वे साध्ये खरविषाणम्। सर्वज्ञो ह्यस्तित्वसिद्धेः प्राक्, न प्रत्यक्षादिप्रमाणसिद्धः। अपि तु प्रतीतिमात्रसिद्ध इति विकल्पसिद्धोऽयं धर्मी। तथा खरविषाणमपि नास्तित्वसिद्धेः प्राग् विकल्पसिद्धम्।

उभयसिद्धो धर्मी यथा शब्दः परिणामी कृतकत्वादित्यत्र शब्दः। स हि वर्तमानः प्रत्यक्षगम्यः, भूतो भविष्यंश्च विकल्पगम्यः। स सर्वोऽपि धर्मीति प्रमाणविकल्पसिद्धो धर्मी। प्रमाणोभयसिद्धयोः साध्ये कामचारः। विकल्पसिद्धे तु धर्मिणि सत्त्वासत्त्वयोरेव साध्यत्वमिति नियमः, तदुक्तं "विकल्पसिद्धे तस्मिन् सत्तेतरे साध्ये" इति।

तदेवं परोपदेशानपेक्षिणः साधनाद् दृश्यमानाद्धर्मिनिष्ठतया साध्ये यद्विज्ञानं तत्स्वार्थानुमानमिति स्थितम्। तदुक्तम्—

"परोपदेशाभावेऽपि साधनात्साध्यबोधनम्।
यद्द्रष्टुर्जायते स्वार्थमनुमानं तदुच्यते"। इति।

परोपदेशमपेक्ष्य साधनात्साध्यविज्ञानं तत्परार्थानुमानम्। प्रतिज्ञाहेतुरूपपरोपदेशवशाच्छ्रोतुरुत्पन्नं साधनात्साध्यविज्ञानं परार्थानुमानमित्यर्थः। यथा पर्वतोऽयमग्निमान् भवितुमर्हति धूमवत्त्वान्यथानुपपत्तेरिति वाक्ये केनचित्प्रयुक्ते तद्वाक्यार्थं पर्यालोचयतः स्मृतव्याप्तिकस्य श्रोतुरनुमानमुपजायते।

परोपदेशवाक्यमेव परार्थानुमानमिति केचित्, त एवं प्रष्टव्याः, तत्किं मुख्यानुमानमथवा गौणानुमानमिति ? न तावन्मुख्यानुमानं, वाक्यस्याज्ञानरूपत्वात् । गौणानुमानं तद्वाक्यमिति त्वनुमन्यामहे, तत्कारणे तद्व्यपदेशोपपत्तेरायुर्वै घृतमित्यादिवत् । तस्यैतस्य परार्थानुमानस्याङ्गसम्पत्तिः स्वार्थानुमानवत्परार्थानुमानप्रयोजकस्य च वाक्यस्य द्वाववयवौ, प्रतिज्ञा हेतुश्च ।

तत्र धर्मधर्मिसमुदायरूपस्य पक्षस्य वचनं प्रतिज्ञा । यथा पर्वतोऽयमग्निमानिति । साध्याविनाभाविसाधनवचनं हेतुः । यथा धूमवत्त्वान्यथानुपपत्तेरिति, तथैव धूमवत्त्वोपपत्तेरिति वा । अनयोर्हेतुप्रयोगयोरुक्तिवैचित्र्यमात्रं । पूर्वत्र धूमवत्त्वान्यथानुपपत्तेरिति । अयमर्थः – धूमवत्त्वस्याग्निमत्त्वाभावेऽनुपपत्तेरिति निषेधमुखेन प्रतिपादनं । द्वितीये तु तथैव धूमवत्त्वोपपत्तेरिति अयमर्थः –अग्निमत्त्वे सत्येव धूमवत्त्वोपपत्तेरिति विधिमुखेन कथनं । अर्थस्तु न भिद्यते, उभयत्राप्यविनाभाविसाधनाभिधानाविशेषात् । ततस्तयोर्हेतुप्रयोगयोरन्यतर एव वक्तव्यः उभयप्रयोगे पौनरुक्त्यात् । तथा चोक्तलक्षणा प्रतिज्ञा, एतयोरन्यतरो हेतुप्रयोगश्चेत्यवयवद्वयं परार्थानुमानवाक्यस्येति, व्युत्पन्नस्य तावन्मात्रेणैवानुमित्युदयात् ।

नैयायिकास्तु परार्थानुमानप्रयोगस्य यथोक्ताभ्यां द्वाभ्यामवयवाभ्यां सममुदाहरणमुपनयो निगमनं चेति पञ्चावयवानाहुः । तथा च ते सूत्रयन्ति "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" इति । तांश्च ते लक्षणपुरस्सरमुदाहरन्ति । तद्यथा "पक्षवचनं प्रतिज्ञा, यथा पर्वतोऽयमग्निमानिति । साधनत्वप्रकाशनार्थं पञ्चम्यन्तं लिङ्गवचनं हेतुः, यथा धूमवत्त्वादिति । व्याप्तिपूर्वकदृष्टान्तवचनमुदाहरणं । यथा यो यो धूमवान् स सोऽग्निमान् यथा महानसः । इति साधर्म्योदाहरणं । यो योऽग्निमान्

भवति स स धूमवान्न भवति यथा महाह्रद इति वैधर्म्योदाहरणं। पूर्वत्रोदाहरणभेदे हेतोरन्वयव्याप्तिः प्रदर्श्यते। द्वितीये तु व्यतिरेकव्याप्तिः। तद्यथा-अन्वयव्याप्तिप्रदर्शनस्थानमन्वयदृष्टान्तः। व्यतिरेकव्याप्तिप्रदर्शनप्रदेशो व्यतिरेकदृष्टान्तः। एवं दृष्टान्तद्वैविध्यात्तद्वचनस्योदाहरणस्यापि द्वैविध्यं बोद्धव्यं। अनयोश्चोदाहरणयोरन्यतरप्रयोगेणैव पर्याप्तत्वादितराप्रयोगः। दृष्टान्तापेक्षया पक्षे हेतोरुपसंहारवचनमुपनयः तथा चायं धूमवानिति। हेतुपूर्वकं पक्षवचनं निगमनं, तस्मादग्निमानेवेति। एते पंचावयवाः परार्थानुमानप्रयोगस्य। तदन्यतमाभावे वीतरागकथायां विजिगीषुकथायां वा नानुमितिरुदेति" इति नैयायिकानामभिमतं। तदेतदविमृश्याभिमननं। वीतरागकथायां तु प्रतिपाद्याशयानुरोधेनावयवाधिक्येऽपि विजिगीषुकथायां प्रतिज्ञाहेतुरूपावयवद्वयेनैव पर्याप्तं किमप्रयोजनैरन्यैरवयवैः।

तथा हि, वादिप्रतिवादिनो स्वमतस्थापनार्थं जयपराजयपर्यंतं परस्परं प्रवर्तमानो वाग्व्यापारो विजिगीषुकथा। गुरुशिष्याणां विशिष्टविदुषां वा रागद्वेषरहितानां तत्त्वनिर्णयपर्यंतं परस्परं प्रवर्तमानो वाग्व्यापारो वीतरागकथा। तत्र विजिगीषुकथा वाद इति चोच्यते। केचिद्वीतरागकथा वाद इति कथयन्ति तत्पारिभाषिकमेव। नहि लोके गुरुशिष्यादिवाग्व्यापारे वादव्यवहारः, विजिगीषुवाग्व्यवहार एव वादत्वप्रसिद्धेः यथा स्वामिसमन्तभद्राचार्यैः सर्वे सर्वथैकान्तवादिनो वादे जिता इति।

तस्मिंश्च वादे परार्थानुमानवाक्यस्य प्रतिज्ञा हेतुरित्यवयवद्वयमेवोपकारकं, नोदाहरणादिकं। तद्यथा, लिंगवचनात्मकेन हेतुना तावदवश्यं भवितव्यं। लिंगज्ञानाभावेऽनुमितेरेवानुदयात्। पक्षवचनरूपया प्रतिज्ञयापि च भवितव्यं, अन्यथाऽभिमतसाध्यनिश्चयाभावे साध्यसंदेहवतः श्रोतुरनुमित्यनुदयात्। तदुक्तं "एतद् द्वयमेवानु-

मानाग, इति । अयमर्थः—एतयोः प्रतिज्ञाहेत्वोर्द्वयमेवानुमानस्य परार्थानुमानस्याङ्ग । वादे इति शेषः । एवकारेणावधारणपरेण नोदाहरणादिकमिति सूचितं भवति । व्युत्पन्नस्यैव हि वादाधिकारः । प्रतिज्ञाहेतुप्रयोगमात्रेणैवोदाहरणादिप्रतिपाद्यस्यार्थस्य गम्यमानस्य व्युत्पन्नेन ज्ञातुं शक्यत्वात् । गम्यमानस्याप्यभिधाने पौनरुक्त्यप्रसंगात् ।

स्यादेतत् । प्रतिज्ञाप्रयोगेऽपि पौनरुक्त्यमेव, तदभिधेयस्य पक्षस्यापि प्रस्तावादिना गम्यमानत्वात् । तथा च, लिंगवचनलक्षणो हेतुरेक एव वादे प्रयोक्तव्य" इति वदन् धर्मः पशुरात्मनो दुर्विदग्धतामुद्घोषयति । हेतुमात्रप्रयोगे व्युत्पन्नस्यापि साध्यसंदेहानिवृत्तेः । तस्मादवश्यं प्रतिज्ञा प्रयोक्तव्या । तदुक्तं "साध्यसंदेहापनोदार्थं गम्यमानस्यापि पक्षस्य वचनं" इति । तदेवं वादापेक्षया परार्थानुमानस्य प्रतिज्ञाहेतुरूपमवयवद्वयमेव, न न्यूनं, नाधिकमिति स्थितं । प्रपंचः पुनरवयवविचारस्य पत्रपरीक्षायामाक्षणीयः ।

वीतरागकथायां तु प्रतिपाद्याशयानुरोधेन प्रतिज्ञाहेतू द्वाववयवौ, प्रतिज्ञाहेतूदाहरणानि त्रयः, प्रतिज्ञाहेतूदाहरणोपनयाश्चत्वारः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि वा पंचेति यथायोग्यं प्रयोगपरिपाटी । तदुक्तं कुमारनंदिभट्टारकैः "प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः" इति । तदत्र प्रतिज्ञादिरूपात्परोपदेशादुत्पन्नं परार्थानुमानं । तदुक्तं—

"परोपदेशसापेक्षं साधनात्साध्यवेदनं ।
श्रोतुर्यज्जायते सा हि परार्थानुमितिर्मता ॥"

तथा च स्वार्थं परार्थं चेति द्विविधमनुमानं साध्याविनाभावनिश्चयैकलक्षणाद्धेतोरुत्पद्यते ।

इत्थमन्यथानुपपत्त्येकलक्षणो हेतुरनुमितिप्रयोजक इति प्रथिते ऽप्यार्हतमते तदेतदविदित्वान्येऽन्यथाप्याहुः । तत्र तावत्तथागता

"पक्षधर्मत्वादित्रितयलक्षणाल्लिंगादनुमानोत्थान" इति वर्णयति। तथा हि "पक्षधर्मत्व सपक्ष सत्त्व विपक्षाद्व्यावृत्तिरिति हेतोस्त्रीणि रूपाणि। तत्र साध्यधर्मविशिष्टो धर्मी पक्ष, यथा धूमध्वजानुमाने पर्वत। तस्मिन् व्याप्य वर्तमानत्व हेतो पक्षधर्मत्व। साध्यसजातीयधर्मा धर्मी सपक्ष। यथा तत्रैव महानस। तस्मिं सर्वत्रैकदेशे वा वर्तमानत्व हेतो सपक्षे सत्त्व। साध्यविरुद्धधर्मा धर्मी विपक्ष। यथा तत्रैव महाह्रद, तस्मात्सर्वस्माद् व्यावृत्तत्व हेतोर्विपक्षाद्व्यावृत्ति। तानीमानि त्रीणि रूपाणि मिलितानि हेतोर्लक्षण। अन्यतमाभावे हेत्वाभासत्व स्यात्" इति।

तदसगत, कृत्तिकोदयादेर्हेतोरपक्षधर्मस्य शकटोदयादिसाध्यगमकत्वदर्शनात्। तथा हि, शकट धर्मि मुहूर्त्तान्ते उदेष्यति कृत्तिकोदयादिति। अत्र हि, शकट पक्ष, मुहूर्त्तान्ते उदय साध्य, कृत्तिकोदयो हेतु। नहि कृत्तिकोदयो हेतु पक्षीकृते शकटे वर्तते। अतो न पक्षधर्म। तथाप्यन्यथानुपपत्तिबलाच्छकटोदयाख्य साध्य गमयत्येव। तस्माद्बौद्धाभिमत हेतोर्लक्षणमव्याप्त।

नैयायिकास्तु पाञ्चरूप्य हेतोर्लक्षणमाचक्षते। तथा हि, पक्षधर्मत्व सपक्षे सत्त्व विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्व चेति पञ्चरूपाणि। तत्राद्यानि त्रीण्युक्तलक्षणानि। साध्यविपरीतनिश्चायकप्रबलप्रमाणरहितत्वमबाधितविषयत्व तादृशसमबलप्रमाणशून्यत्वमसत्प्रतिपक्षत्व। तद्यथा, पर्वतोयमग्निमान् धूमवत्त्वात्। यो यो धूमवान् स सोऽग्निमान्, यथा महानस। यो योऽग्निमान् न भवति स स धूमवान् न भवति, यथा महाह्रद। तथा चाय धूमवांस्तस्मादग्निमानेवेति।

अत्र हि अग्निमत्त्वेन साध्यधर्मेण विशिष्ट पर्वताख्यो

धूमवत्त्व हेतु । तस्य च तावत्पक्षधर्मत्वमस्ति, पक्षीकृते पर्वते वर्तमानत्वात् । सपक्ष सत्त्वमप्यस्ति, सपक्षे महानसे वर्तमानत्वात् । ननु कस्मिंश्चित्सपक्षेषु धूमवत्त्व न वर्तते, अङ्गारावस्थापन्नाग्निमत्सु प्रदेशेषु धूमाभावादिति चेन्न, सपक्षैकदेशवृत्तेरपि हेतुत्वात् । सपक्षे सर्वत्रैकदेशे वा वृत्तिर्हेतो सपक्ष सत्त्वमित्युक्तत्वात् । विपक्षाद्व्यावृत्तिरप्यस्ति, धूमवत्त्वस्य सर्वमहाह्रदादिविपक्षाद्व्यावृत्ते । अबाधितविषयत्वमप्यस्ति, धूमवत्त्वस्य हेतोर्यो विषयोऽग्निमत्त्वाख्य साध्य तस्य प्रत्यक्षादिप्रमाणाबाधितत्वात् । असत्प्रतिपक्षत्वमप्यस्ति अग्निरहितत्वसाधकस्य प्रमाणस्याभावात् । तथा च, पाञ्चरूप्यसम्पत्तिरेव धूमवत्त्वस्य साध्यसाधकत्वे निबन्धन । एवमेव सर्वेषामपि सद्धेतूनां रूपपञ्चकसम्पत्तिरूह्या ।

तदन्यतमविरहादत्र सन्ति पञ्चहेत्वाभासा, असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाख्या सप्रभा । तथा हि, अनिश्चितपक्षवृत्तिरसिद्ध । यथा अनित्य शब्दश्चाक्षुषत्वात् । अत्र हि चाक्षुषत्व हेतु पक्षीकृत शब्दे न वर्तते, श्रावणत्वात् शब्दस्य । तथा च पक्षधर्मत्वविरहादसिद्धत्व चाक्षुषत्वस्य । साध्यविपरीतव्याप्तो विरुद्ध । यथा नित्य शब्द कृतकत्वादिति । कृतकत्व हेतु साध्यभूतनित्यत्वविपरीतेनानित्यत्वेन व्याप्तत्वात्, सपक्षे च गगनादावविद्यमानत्वाद्विरुद्ध ।

सव्यभिचारोऽनैकान्तिक । यथा अनित्य शब्द, प्रमेयत्वादिति । प्रमेयत्व हि हेतु साध्यभूतमनित्यत्व व्यभिचरति, गगनादौ विपक्षे नित्यत्वेनापि सहवृत्ते । ततो विपक्षाद्व्यावृत्त्यभावादनैकान्तिक । बाधितविषय कालात्ययापदिष्ट यथाऽग्निरनुष्ण, पदार्थत्वादिति । अत्र पदार्थत्व हेतु स्वविषयेऽनुष्णत्वे उष्णत्वग्राहकेण प्रत्यक्षेण बाधिते प्रवर्तमानोऽबाधितविषयत्वाभावात्कालात्ययापदिष्ट ।

प्रतिसाधनप्रतिरुद्धो हेतुः प्रकरणसमः । यथा अनित्यः शब्दो नित्यधर्मरहितत्वादिति । अत्र हि नित्यधर्मरहितत्वादिति हेतुः प्रतिसाधनेन प्रतिरुद्धः । किं तत्प्रतिसाधनमिति चेत्, नित्यः शब्दोऽनित्यधर्मरहितत्वादिति नित्यत्वसाधनम् । तथा चासत्प्रतिपक्षत्वाभावात् प्रकरणसमत्वं नित्यधर्मरहितत्वादिति हेतोः ।

तस्मात्पाञ्चरूप्यं हेतोर्लक्षणम् तदभावे हेत्वाभासत्वप्रसङ्गादिति सूक्तम् । हेतुलक्षणरहिता हेतुवदवभासमानाः खलु हेत्वाभासाः । पञ्चरूपान्यतमशून्यत्वाद्धेतुलक्षणरहितत्वं कतिपयरूपसम्पत्तेर्हेतुवदवभासमानत्वमिति वचनादिति । तदेतदपि नैयायिकाभिमतमनुपपन्नं, कृत्तिकोदयस्य पक्षधर्मरहितस्यापि शकटोदयं प्रति हेतुत्वदर्शनात् पाञ्चरूप्यस्याव्याप्तेः ।

किं च केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोः पाञ्चरूप्याभावेऽपि गमकत्वं तैरेवाङ्गीक्रियते । तथा हि—ते मन्यते, त्रिविधो हेतुः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति । तत्र पञ्चरूपोपपन्नोऽन्वयव्यतिरेकी, यथा शब्दोऽनित्यो भवितुमर्हति कृतकत्वात् । यद्यत्कृतकं तत्तदनित्यं, यथा घटः । यद्यदनित्यं न भवति तत्तत्कृतकं न भवति, यथाऽऽकाशः । तथा चायं कृतकः, तस्मादनित्य एवेति । अत्र शब्दं पक्षीकृत्यानित्यत्वं साध्यते, तत्र कृतकत्वं हेतुः । तस्य पक्षीकृतशब्दधर्मत्वात्पक्षधर्मत्वमस्ति । सपक्षे घटादौ वर्तमानत्वात्, विपक्षे गगनादाववर्तमानत्वादन्वयव्यतिरेकित्वम् ।

पक्षसपक्षवृत्तिर्विपक्षवृत्तिरहितः केवलान्वयी । यथाऽदृष्टादयः कस्यचित्प्रत्यक्षाः, अनुमेयत्वात् यद्यदनुमेयं तत्तत्कस्यचित्प्रत्यक्षं । यथाऽग्न्यादिरिति । अत्र 'अदृष्टादयः' पक्षः, कस्यचित्प्रत्यक्षत्वं साध्यं, अनुमेयत्वं हेतुः, अग्न्यादिरन्वयदृष्टान्तः । अनुमेयत्वं हेतुः पक्षी-

कृतेऽग्न्यादौ वर्तते, सपक्षभूतेऽग्न्यादौ वर्तते, अतः पक्षधर्मत्वं सपक्षे सत्त्वं चास्ति। विपक्षे पुनरत्र नास्त्येव, सर्वस्यापि पक्षसपक्षान्तर्भावात्। तस्माद्विपक्षाद्व्यावृत्तिर्नास्त्येव, व्यावृत्तेरवधिसापेक्षत्वादवधिभूतस्य च विपक्षस्याभावात्। शेषमन्वयव्यतिरेकिवद्द्रष्टव्यम्।

पक्षवृत्तिर्विपक्षव्यावृत्तः सपक्षरहितो हेतुः केवलव्यतिरेकी। यथा जीवच्छरीरं सात्मकं भवितुमर्हति प्राणादिमत्त्वात्। यदात्मकं न भवति तत्प्राणादिमन्न भवति, यथा लोष्टमिति। अत्र जीवच्छरीरं पक्षः, सात्मकत्वं साध्यं, प्राणादिमत्त्वं हेतुः, लोष्टादिर्व्यतिरेकिदृष्टान्तः। प्राणादिमत्त्वं हेतुः पक्षीकृते जीवच्छरीरे वर्तते। विपक्षाच्च लोष्टादेर्व्यावर्तते। सपक्षः पुनरत्र नास्त्येव। सर्वस्यापि पक्षविपक्षान्तर्भावादिति। शेषं पूर्ववत्।

एवमेतेषां त्रयाणां हेतूनां मध्येऽन्वयव्यतिरेकिण एव पाञ्चरूप्यं, केवलान्वयिनो विपक्षव्यावृत्त्यभावात् केवलव्यतिरेकिणः सपक्षसत्त्वाभावाच्च नैयायिकमतानुसारेणैव पाञ्चरूप्यव्यभिचारः। अन्यथानुपपत्तेस्तु सर्वहेतुसाधारण्याद्धेतुलक्षणत्वमुचितम्। तदभावे हेतोः स्वसाध्यगमकत्वाघटनात्।

यदुक्तमसिद्धादिदोषपञ्चकनिवारणाय क्रमेण पञ्चरूपाणीति तन्न, अन्यथानुपपत्तिमत्त्वेन निश्चितत्वस्यैवास्मदभिमतलक्षणस्य तन्निवारकत्वसिद्धेः। तथा हि, साध्यान्यथानुपपत्तिमत्त्वे सति निश्चयपथप्राप्तत्वं खलु हेतोर्लक्षणं साध्याविनाभावित्वेन निश्चितो हेतुरिति वचनात्। न चैतदसिद्धस्यास्ति, शब्दानित्यत्वसाधनायाभिप्रेतस्य चाक्षुषत्वादेः स्वरूपस्यैवाभावे कुतोऽन्यथानुपपत्तिमत्त्वेन निश्चयपथप्राप्तिः।

तत साध्यान्यथानुपपत्तिमत्त्वेन निश्चयपथप्राप्त्यभावादेवास्य हेत्वाभासत्वं, न तु पक्षधर्मत्वाभावात् अपक्षधर्मस्यापि कृत्तिकोदयादेर्

थात्तलक्षणसम्पत्तेरेव सद्धेतुत्वप्रतिपादनात्। विरुद्धादेस्तु तदभाव स्पष्ट एव । नहि विरुद्धस्य व्यभिचारिणो वाधितविषयस्य सत्प्रतिपक्षस्य वान्यथानुपपत्तिमत्त्वेन निश्चयपथप्राप्तिरस्ति । तस्माद्यस्यान्यथानुपपत्तिमत्त्वे सति योग्यदेशे निश्चयपथप्राप्तिरस्ति स एव सद्धेतु, अपरस्तदाभास इति स्थित ।

किंच गर्भस्थो मैत्रतनय श्यामो भवितुमर्हति, मैत्रतनयत्वात् सम्प्रतिपन्नमैत्रतनयवदित्यत्रापि त्रैरूप्यपाचरूप्ययोर्विद्यमानयोरपि हेत्वाभासलक्षणत्व। तथा हि, परिदृश्यमानेपु पचसु मैत्रपुत्रपु श्याम तामुपलभ्य तद्धर्मगतमपि विवादापन्न पक्षीकृत्य श्यामत्वसाधनाय प्रयुक्तो मैत्रतनयाख्या हेतुराभास इति तावत्प्रसिद्ध । अश्यामत्वस्यापि तत्र सभावितत्वात् । तत्सभावना च श्यामत्व प्रति मैत्रतनयत्वस्यान्यथानुपपत्त्यभावात् । तदभावश्च सहक्रमभावनियमाभावात् ।

यस्य हि धर्मस्य येन धर्मेण सहभावनियम स त गमयति, यथा शिंशपात्वस्य वृक्षत्वेन सहभावनियमोऽस्तीति शिंशपात्वहेतुर्वृक्षत्व गमयति । यस्य येन क्रमभावनियम स त गमयति, यथा धूमस्याग्न्यनन्तरभावनियमोऽस्तीति धूमोऽग्नि गमयति । नहि मैत्रतनयत्वस्य हेतुत्वाभिमतस्य श्यामत्वेन साध्यत्वाभिमतेन सहभाव क्रमभावो वा नियमोऽस्ति, येन मैत्रतनयत्व हेतु श्यामत्व साध्य गमयेत् ।

यद्यपि सम्प्रतिपन्नमैत्रपुत्रेपु मैत्रतनयत्वश्यामत्वयो सहभावोस्ति, तथापि नासौ नियत, मैत्रतनयत्वमस्तु श्यामत्व मास्तु इत्येवरूपे विपक्षे वाधकाभावात् । विपक्षवाधकप्रमाणवलान्नन्द हेतुसाध्ययोर्व्याप्तिनिश्चय । व्याप्तिनिश्चयश्च सहभाव क्रमभावो वा, सहक्रमभावनियमोऽविनाभाव इति वचनात् । विवादाध्यासितो वृक्षो भवितुमर्हति, शिंशपात्वात् । या या शिंशपा स स वृक्ष, यथा सम्प्रतिपन्न

वृष्टिर्भविष्यति विशिष्टमेघान्यथानुपपत्तेरिति । अत्र मेघविशेषो हि वर्षस्य कारणं स्वकार्यभूतं वर्षं गमयति।

नतु कार्यं कारणानुमापकमस्तु कारणाभावे कार्यस्यानुपपत्तेः । कारणं तु कार्याभावेऽपि संभवति, यथा धूमाभावेऽपि संभवन् वह्नि-र्सुप्रतीतः । अत एव न वह्निर्धूमं गमयति इति चेत् तन्न, उन्मीलितशक्तिकस्य कारणस्य कार्याव्यभिचारित्वेन कार्यं प्रति हेतुत्वाविरोधात्। कश्चिद्विशेषरूपो, यथा वृक्षोऽयं शिंशपात्वान्यथानुपपत्तेरिति। अत्र शिंशपा हि वृक्षविशेषः सामान्यभूतं वृक्षं गमयति। न हि वृक्षाभावे वृक्षविशेषो घटते इति।

कश्चित्पूर्वचरो, यथा उदेष्यति शकटं कृत्तिकोदयान्यथानुपपत्तेरित्यत्र कृत्तिकोदयः । कृत्तिकोदयानन्तरं मुहूर्तान्ते नियमेन शकटोदयो जायते, इति कृत्तिकोदयः पूर्वचरो हेतुः शकटोदयं गमयति। कश्चिदुत्तरचरो, यथा उदगाद्भरणिः प्राक्कृत्तिकोदयादित्यथानुपपत्तेरित्यत्र कृत्तिकोदयः । कृत्तिकोदयो हि भरण्युदयोत्तरचरस्तं गमयति। कश्चित्सहचरो, यथा मातुलिंगं रूपवद्भवितुमर्हति रसवत्त्वान्यथानुपपत्तेरित्यत्र रसः । रसो नियमेन रूपसहचरितस्तदभावेऽनुपपद्यमानस्तं गमयति।

एतेषूदाहरणेषु भावरूपानेवाग्न्यादीन्साधयन्तो धूमादयो हेतवो भावरूपा एवेति विधिसाधकविधिरूपाः । एत एवाविरुद्धोपलब्ध्य इत्युच्यते। एवं विधिरूपस्य हेतोर्विधिसाधकाख्य आद्यो भेद उदाहृतः ।

द्वितीयस्तु निषेधसाधकाख्यः । विरुद्धोपलब्धिरिति तस्यैव नामान्तरं । स यथा, नास्य मिथ्यात्वमास्तिक्यान्यथानुपपत्तेरित्यत्रास्तिक्यं । आस्तिक्यं हि सर्वज्ञवीतरागप्रणीतजीवादितत्त्वार्थरुचिलक्षणं । तन्मिथ्यात्ववतो न संभवतीति मिथ्यात्वाभावं साधयति ।

नास्ति

नेकान्तात्मकत्वम्। अनेकान्तात्मकत्वं हि वस्तुन्यबाधितप्रतीतिविषयत्वेन प्रतिभासमानं सौगतादिपरिकल्पितसर्वथैकान्ताभावं साधयत्येव।

ननु किमिदमनेकान्तात्मकत्वं? यद्बलाद्वस्तुनि सर्वथैकान्ताभावः साध्यते इति चेदुच्यते। सर्वस्मिन्नपि जीवादिवस्तुनि भावाभावरूपत्वमेकानेकरूपत्वं नित्यानित्यरूपत्वमित्येवमादिकमनेकान्तात्मकत्वम्। एवं विधिरूपो हेतुर्दर्शितः। प्रतिषेधरूपोऽपि हेतुर्द्विविधो, विधिसाधकः प्रतिषेधसाधकश्चेति। तत्राद्यो यथा, अस्त्यत्र प्राणिनि सम्यक्त्वं विपरीताभिनिवेशाभावात्। अत्र विपरीताभिनिवेशाभावः प्रतिषेधरूपः सम्यक्त्वसद्भावं साधयतीति प्रतिषेधरूपो विधिसाधको हेतुः।

द्वितीयो यथा, नास्त्यत्र धूमः अग्न्यनुपलब्धेरिति। अत्र ह्यग्न्यभावः प्रतिषेधरूपो धूमाभावं प्रतिषेधरूपमेव साधयतीति प्रतिषेधरूपप्रतिषेधसाधको हेतुः। तदेवं विधिप्रतिषेधरूपतया द्विविधस्य हेतोः कतिचिदवान्तरभेदा उदाहृताः। विस्तरतस्तु परीक्षामुखतः प्रतिपत्तव्याः। इत्थमुक्तलक्षणा हेतवः साध्यं गमयन्ति, नान्ये, हेत्वाभासत्वात्। के ते हेत्वाभासा इति चेदुच्यन्ते। हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः। ते चतुर्विधाः असिद्धविरुद्धानैकान्तिकाकिञ्चित्करभेदात्। तत्रानिश्चयपथप्राप्तोऽसिद्धः। अनिश्चयपथप्राप्तिश्च हेतोः स्वरूपाभावनिश्चयात्स्वरूपसन्देहाच्च। स्वरूपाभावनिश्चये स्वरूपासिद्धः। स्वरूपसन्देहे सन्दिग्धासिद्धः। आद्यो यथा, परिणामी शब्दश्चाक्षुषत्वादिति। शब्दस्य हि श्रावणत्वाच्चाक्षुषत्वाभावो निश्चित इति स्वरूपासिद्धश्चाक्षुषत्वहेतुः। द्वितीयो यथा, धूमबाष्पादिविवेकानिश्चये कश्चिदाह अग्निमानयं प्रदेशो धूमवत्त्वादिति। अत्र हि धूमवत्त्वं हेतुः सन्दिग्धासिद्धस्तत्स्वरूपे सन्देहात्।

साध्यविपरीतव्याप्तो विरुद्धः। यथाऽपरिणामी शब्दः कृतकत्वात्। कृतकत्वं ह्यपरिणामित्वविरोधिना परिणामित्वेन व्याप्तम्। पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः। स द्विविधो, निश्चितविपक्षवृत्तिक

शंकितविपक्षवृत्तिकश्चेति। तत्राद्यो यथा, धूमवानयं प्रदेशोऽग्निमत्त्वादिति। अत्राग्निमत्त्वं हेतुः पक्षीकृते संदिह्यमानधूमे पुरोवर्तिनि प्रदेशे वर्तते, सपक्षे धूमवति महानसे च वर्तते। विपक्षे धूमरहितत्वेन निश्चितेऽङ्गारावस्थापन्नाग्निमति प्रदेशे वर्तते। इति निश्चयान्निश्चितविपक्षवृत्तिकः।

द्वितीयो यथा, गर्भस्थो मैत्रतनयः श्यामो भवितुमर्हति मैत्रतनयत्वादितरतनयवदिति। अत्र हि मैत्रतनयत्वं हेतुः पक्षीकृते गर्भस्थे वर्तते, सपक्षे इतरतत्पुत्रे वर्तते, विपक्षे अश्यामे वर्तते। नापीति शङ्काया अनिवृत्तेः शंकितविपक्षवृत्तिकः। अपरमपि शंकितविपक्षवृत्तिकस्योदाहरणं। सर्वज्ञो न भवति वक्तृत्वाद्रथ्यापुरुषवदिति। वक्तृत्वस्य हि हेतोः पक्षीकृतेऽर्हति, सपक्षे रथ्यापुरुषे यथा वृत्तिरस्ति तथा विपक्षे सर्वज्ञेऽपि वृत्तिः संभाव्यते, वक्तृत्वज्ञातृत्वयोरविरोधात्। यद्धि येन सह विरोधि तत्खलु तद्वति न वर्तते। न च वचनज्ञानयोर्लोके विरोधोऽस्ति, प्रत्युत ज्ञानवत एव वचनसौष्ठवं स्पष्टं दृष्टं। ततो ज्ञानोत्कर्षवति सर्वज्ञे वचनोत्कर्षे कानुपपत्तिरिति।

अप्रयोजको हेतुरकिंचित्करः। स द्विविधः, सिद्धसाधनो बाधितविषयश्च। तत्राद्यो यथा, शब्दः श्रावणो भवितुमर्हति शब्दत्वादिति। अत्र श्रावणत्वस्य साध्यस्य शब्दनिष्ठत्वेन सिद्धत्वाद्धेतुरकिंचित्करः। बाधितविषयस्त्वनेकधा। कश्चित्प्रत्यक्षबाधितविषयः। यथा, अनुष्णोऽग्निर्द्रव्यत्वादित्यत्र द्रव्यत्वंहेतुः। तस्य विषयत्वेनाभिमतमनुष्णत्वमुष्णत्वग्राहकेण स्पार्शनप्रत्यक्षेण बाधितं। ततः किंचिदपि कर्तुमशक्यत्वादकिंचित्करो द्रव्यत्वहेतुः। कश्चित्पुनरनुमानबाधितविषयः। यथा, अपरिणामी शब्दोऽकृतकत्वादिति। अत्र परिणामी शब्दः प्रमेयत्वादित्यनुमानेन बाधितविषयत्वं।

कश्चिदागमबाधितविषयः। यथा, प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवदिति। अत्र धर्मः सुखप्रद इत्यागमः।

पक्षस्य हेतोः । कश्चित्स्ववचनबाधितविषयः । यथा, मे माता वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात् प्रसिद्धवन्ध्यावत् । एवमादयोऽप्यकिंचित्करविशेषाः स्वयमूह्याः । तदेवं हेतुप्रसङ्गाद्धेत्वाभासा अवभासिताः । ननु व्युत्पन्नं प्रति यद्यपि प्रतिज्ञाहेतुभ्यामेव पर्याप्तं । तथापि बालबोधार्थमुदाहरणादिकमप्यभ्युपगतमाचार्यैः । उदाहरणं च सम्यग्दृष्टान्तवचनं । कोऽयं दृष्टान्तो नामेति चेदुच्यते ।

व्याप्तिसंप्रतिपत्तिप्रदेशो दृष्टान्तः । व्याप्तिर्हि साध्ये वह्न्यादौ सत्येव साधनं धूमादिरस्ति, असति तु नास्तीति साध्यसाधननियतता साहचर्यलक्षणा । एतामेव साध्यं विना साधनस्याभावादविनाभावमिति च व्यपदिशन्ति । तस्याः संप्रतिपत्तिर्नाम वादिप्रतिवादिनोर्बुद्धिसाम्यं । सैषा यत्र संभवति स संप्रतिपत्तिप्रदेशो महानसादिर्ह्रदादिश्च, तत्रैव धूमादौ सति नियमेनाग्न्यादिरस्त्यग्न्याद्यभावे नियमेन धूमादिर्नास्तीति संप्रतिपत्तिसंभवात् ।

तत्र महानसादिरन्वयदृष्टान्तः, अत्र साध्यसाधनयोर्भावरूपान्वयसंप्रतिपत्तिसंभवात् । ह्रदादिस्तु व्यतिरेकदृष्टान्तः, अत्र साध्यसाधनयोरभावरूपव्यतिरेकसंप्रतिपत्तिसंभवात् । दृष्टान्तौ चैतौ, दृष्टान्तौ धर्मौ साध्यसाधनरूपौ यत्र स दृष्टान्त इत्यर्थानुवृत्तेः । उक्तलक्षणस्यास्य दृष्टान्तस्य यत्सम्यग्वचनं तदुदाहरणं । न च वचनमात्रमयं दृष्टान्त इति किंतु दृष्टान्तत्वेन वचनं । तद्यथा, यो यो धूमवानसावसावग्निमान्, यथा महानस इति । यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा महाह्रद इति च । एवंविधेनैव वचनेन दृष्टान्तस्य दृष्टान्तत्वेन प्रतिपादनसंभवात् ।

उदाहरणलक्षणरहित उदाहरणवदवभासमान उदाहरणाभासः । उदाहरणलक्षणराहित्यं च द्वेधा संभवति, दृष्टान्तस्यासम्यग्वचनेनादृष्टान्तस्य सम्यग्वचनेन वा । तत्राद्यं यथा, यो यो वह्निमान् स स

धूमवान्, यथा महानस इति, यत्र यत्र धूमो नास्ति तत्र तत्र अग्नि-नास्ति, यथा महाह्रद इति च व्याप्यव्यापकयोर्वैपरीत्येन कथन।

ननु किमिदं व्याप्य व्यापकं नामेति चेदुच्यते। साहचर्यनियमरूपां व्याप्तिक्रियां प्रति यत्कर्म तद्व्याप्य। ण्यन्तादापे कर्मणि व्यविधानाद्व्याप्यमिति सिद्धत्वात्। तत्तु व्याप्य धूमादि। एतामेव व्याप्तिक्रियां प्रति यत्कर्तृ तद्व्यापक। व्यापे कर्तरि ण्वौ सति व्यापकमिति सिद्धे। एवं सति धूममग्निर्व्याप्नोति, यत्र धूमो वर्तते तत्र नियमेनाग्निर्वर्तते इति यावत्सर्वत्र धूमवति नियमेनाग्निदर्शनात्। धूमस्तु न तथाग्निं व्याप्नोति, तस्याङ्गारावस्थस्य धूमं विनापि वर्तमानत्वात्। यत्राग्निर्वर्तते तत्र धूमोपि नियमेन वर्तते इत्यसम्भवात्।

नन्वार्द्रेन्धनमग्निं व्याप्नोत्येव धूम इति चेद् ओमिति ब्रूमहे। यत्र यत्रानिच्छिन्नमूलो धूमस्तत्र तत्राग्निरिति यथा तथैव यत्र यत्रार्द्रधनोऽग्निस्तत्र तत्र धूम इत्यपि सम्भवात्। वह्निमात्रस्य तु धूमविशेषं प्रति व्यापकत्वमेव, अनुमातृस्तत्र मात्रापेक्षत्वात्। ततो यो यो धूमवानसावसावग्निमान्, यथा महानस इत्येव गम्यदृष्टान्तवचन वक्तव्य। विपरीतवचन तु दृष्टान्ताभास एवान्वयमसम्यग्वचनरूपोऽन्वयदृष्टान्ताभास। व्यतिरेकव्याप्तौ तु व्यापकस्याग्नेरभावो व्याप्य, व्याप्यस्य धूमस्याभावो व्यापक। तथा सति यत्र यत्राग्न्यभावस्तत्र तत्र धूमाभावो, यथा ह्रद इत्येव वक्तव्य। विपरीतकथन त्वसम्यग्वचन स्यादुदाहरणाभास एव। अन्वयव्याप्तौ व्यतिरेकदृष्टान्तवचन, व्यतिरेकव्याप्तावन्वयदृष्टान्तवचन चोदाहरणाभासो। स्पष्टमुदाहरण।

ननु गर्भस्थ श्यामो मैत्रतनयत्वात्सम्प्रतिमैत्रतनयवदित्याद्यनुमानप्रयोगे पञ्चसु मैत्रतनयेष्वन्वयदृष्टान्तेषु यत्र यत्र मैत्रतनयत्व तत्र तत्र श्यामत्वमित्यन्वयव्याप्ति, व्यतिरेकदृष्टान्तेषु गौरेष्वमैत्रतनयेषु सर्वत्र श्यामत्व नास्ति तत्र तत्र मैत्रतनयत्व नास्तीति

व्यतिरेकव्याप्तेश्च संभवान्निश्चितसाधने गर्भस्थमैत्रतनये पक्षे साध्य-भूतश्यामत्वसंदेहस्य गुणत्वात्सम्यगनुमान प्रसज्येतेति चेन्न ।

दृष्टान्तस्य विचारान्तरबाधितत्वात् । तथा हि, साध्यत्वेनाभिमत-मिदं हि श्यामरूप कार्यं सत् स्वसिद्धये कारणमपेक्षते । तच्च कारण न तावन्मैत्रतनयत्व विनापि तदिद पुरुषान्तरे श्यामत्वदर्शनात् । न हि कुलालचक्रादिकमन्तरेणापि संभवत पटस्य कुलालादिकं कारण । एव मैत्रतनयत्वस्य श्यामत्वप्रयोजकत्वे निश्चिते यत्र यत्र मैत्रतनयत्व न तत्र तत्र श्यामत्व किंतु यत्र यत्र श्यामत्वस्य कारण विशिष्टनामकर्मानुगृहीतशाकाद्याहारपरिणामस्तत्र तत्र तस्य कार्यं श्यामत्वमिति सामग्रीरूपस्य विशिष्टनामकर्मानुगृहीतशाकाद्याहारपरिणा-मस्य श्यामत्व प्रति व्याप्तिः । स तु पक्षे न निश्चीयत इति संदिग्धा-सिद्ध । मैत्रतनयत्व त्वकारणत्वादेव श्यामत्व कार्यं न गमयेदिति ।

कश्चिन्निरुपाधिकसंबन्धो व्याप्तिरित्यभिधाय साधनाव्यापकत्वे सति साध्यसमव्याप्तिरुपाधिरित्यभिधत्ते । सोऽयमन्योन्याश्रय । प्रपञ्चि-तमेतदुपाधिनिराकरण कारुण्यकलिकायामिति विरम्यते । साधन-वत्तया पक्षस्य दृष्टान्तसाम्यकथनमुपनय । तथा चायं धूमवानिति । साधनानुवादपुरस्सर साध्यनियमवचन निगमन । तस्मादग्निमाने-वेति । अनयोरत्ययेन कथनमनयोराभास । इत्युक्तमनुमान ।

अथागमो लक्ष्यते । आप्तवाक्यनिबन्धनमर्थज्ञानमागम । अत्रा-गम इति लक्ष्य । अवशिष्ट लक्षण । अर्थज्ञानमित्युच्यमाने प्रत्यक्षादावतिव्याप्ति , अत उक्त वाक्यनिबन्धनमिति । वाक्यनिबन्धन-मर्थज्ञानमागम इत्युच्यमानेऽपि यादृच्छिकसंवादिषु विप्रलम्भकवाक्यज-न्येषु सुप्तोन्मत्तादिवाक्यजन्येषु वा नदीतीरफलसंसर्गादिज्ञानेष्वति-व्याप्ति । अत उक्तमाप्तेति । आप्तवाक्यनिबन्धनज्ञानमित्युच्यमानेऽपि आप्तवाक्यकर्मके श्रावणप्रत्यक्षेऽतिव्याप्ति , अत उक्तमर्थेति । अर्थ

त्तात्पर्यरूप इति यावत् । तात्पर्यमेव वचसीत्यभियुक्तवचनात्। तत आप्तवाक्यनिबंधनमर्थज्ञानमित्युक्तमागमलक्षण निर्दोषमेव ।

यथा "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग " इत्यादिवाक्यार्थज्ञान। सम्यग्दर्शनादीन्यनेकानि मोक्षस्य सकलकर्मक्षयस्य मार्ग उपायो, न तु मार्गा , ततो भिन्नलक्षणाना दर्शनादीनां त्रयाणा समुदितानामेव मार्गत्व, न तु प्रत्यकमित्ययमर्थ । मार्ग इत्येकवचनप्रयोगतात्पर्यसिद्ध , अयमेव वाक्यार्थ अत्रैवार्थे प्रमाणसाध्यसशयादिनिवृत्ति प्रमिति ।

क पुनरयमाप्त इति चदुच्यते । आप्त प्रत्यक्षप्रमितसकलार्थत्व सति परमहितोपदेशक । प्रमितेत्यादावनोच्यमाने श्रुतकेवलिष्वतिव्याप्ति , तेषामागमप्रमितसकलार्थत्वात् । अत उक्त प्रत्यक्षेति। प्रत्यक्षप्रमितसकलार्थ इत्येतावदुच्यमाने सिद्धेष्वतिव्याप्ति , अत उक्त परमेत्यादि । परम हित नि श्रयसम्। तदुपदेश एव अर्हत प्रामुख्येन प्रवृत्ति । अन्यत्र तु प्रश्नानुरोधादुपसर्जनत्वेनेति भाव । नैव विध सिद्धपरमेष्ठी, तस्यानुपदेशकत्वात । ततोऽनन विशेषणेन तत्र नातिव्याप्ति । आप्तमद्यत्वे प्रमाणमुपन्यस्त । नैयायिकाद्यभिमताना माप्ताभासानामसर्वज्ञ त्वात्प्रत्यक्षप्रमितेत्यादिविशेषणेनैव निरास ।

ननु नैयायिकाभिमत आप्त कथ न सर्वज्ञ ? इति चेदुच्यते तस्य ज्ञानस्यास्वप्रकाशकत्वादेकत्वाच्च विशेषणभूत स्वकीय ज्ञानमेव न जानातीति तद्विशिष्टमात्मान सर्वज्ञोऽहमिति कथ जानीयात् ? एवमनात्मज्ञोयमसर्वज्ञ एव । प्रपचित च सुगतादीनामाप्ताभासत्व माप्तमीमासाविवरणे श्रीमदाचार्यपादैरिति विरम्यते । वाक्य ॥ तत्रा तरसिद्धमिति नेह लक्ष्यत ।

अथ कोयमर्थो नाम ? उच्यते। अर्थोऽनेकांत ।अर्थ इति निर्देश , अभिधेय इति यावत् । अनेकांत इति

अतो धर्मा सामान्यविशेषपर्याया गुणा यस्येति सिद्धोऽनेकांत । तत्र सामान्यमनुवृत्तस्वरूप, तद्धि घटत्व पृथुबुध्नादराकार, गोत्वमिति सास्नादिमत्त्वमेव । तस्मात् व्यक्तितोऽत्यन्तमपरिन्नमेकमनेकवृत्ति ।

अन्यथा " न याति न च तत्रासीत् न पश्चादस्ति नांशवत् । जहाति पूर्वं नाधारमहो व्यसनसंतति " ॥ इति दिङ्नागदूषणदुर्निवारणप्रसंगप्रसंगात् । पृथुबुध्नोदराकारादिदर्शनानन्तरमेव घटोऽयं गौरयमित्याद्यनुवृत्तप्रत्ययसंभवात् । विशेषोऽपि स्थूलोऽयं घट सूक्ष्म इत्यादिव्यावृत्तप्रत्ययनिबंधन घटादिस्वरूपमेव । तथा चाह भगवान्माणिक्यनंदिभट्टारक "सामान्यविशेषात्मा तदर्थ " इति ।

पर्यायो द्विविध , अर्थपर्यायो व्यंजनपर्यायश्चेति । तत्रार्थपर्यायो भूतत्वभविष्यत्त्वसंस्पर्शरहितशुद्धवर्तमानकालावच्छिन्न वस्तुस्वरूप । तदेतदृजुसूत्रनयविषयमामनन्त्यभियुक्ता । एतदेकदेशावलंबिन खलु सौगता क्षणिकवादिन । व्यंजनं व्यक्ति , प्रवृत्तिनिवृत्तिनिबंधनजलानयनाद्यर्थक्रियाकारित्व । तेनोपलक्षित पर्यायो व्यंजनपर्याया—मृदादेः पिंडस्थासकोशकुसूलघटकपालादय पर्याया ।

यावद्द्रव्यभाविन सकलपर्यायानुवर्तिनो गुणा । वस्तुत्वरूपरसगंधस्पर्शादय । मृद्द्रव्यसंबंधिनो हि वस्तुत्वादय पिंडादिपर्यायाननुवर्तंते, न तु पिंडादय स्थासादीन् । तत एव पर्यायाणा गुणेभ्यो भेद । यद्यपि सामान्यविशेषौ पर्यायौ तथापि संकेतग्रहणनिबंधनत्वात् शब्दव्यवहारविषयत्वा(दा)गमप्रस्तावे तयो पृथङ्निर्देश । तदनयोर्गुणपर्याययोर्द्रव्यमाश्रय "गुणपर्ययवद् द्रव्य" इति वाचायोऽनुशासनात् । तदपि सत्त्वमेव "सत्त्व द्रव्य" इत्याकलंकवचनात् ।

तदपि भावद्रव्यमजीवद्रव्य चेति संक्षेपतो द्विविध । द्वयमप्येतदुत्पत्तिविनाशस्थितियोगि "उत्पादव्ययध्रौव्ययुक्त सत्" इति निरूपणात् ।

तथा हि, जीवद्रव्यस्य स्वर्गप्रापकपुण्योदये सति मनुष्यस्वभावस्य व्यय, देवस्वभावस्योत्पाद, चैतन्यस्वभावस्य ध्रौव्यमिति, जीवद्रव्यस्य सर्वथैकांतरूपत्वे पुण्यादयेनैष्फल्यप्रसंगात्। सर्वथा भेदे पुण्यवानन्य फलवानन्य इति पुण्यसंपादनवैयर्थ्यप्रसंगात् परोपकारस्याप्यात्ममुक्तार्थमेव प्रवर्तमानत्वात्। तस्माज्जीवद्रव्यरूपेणाभेद। मनुष्यपर्यायदेवपर्यायरूपेण भेद इति प्रतिनियतनयनिरस्ताविरोधौ भेदाभेदौ प्रामाणिकावेव।

तथैवाजीवद्रव्यस्य मृद्द्रव्यस्यापि मृद पिंडाकारस्य व्यय, पृथुबुध्नोदराकारस्योत्पाद, मृद्रूपस्य ध्रुवत्वमिति, सिद्धमुत्पादादियुक्तत्वमजीवस्य। स्वामिसमंतभद्राचार्याभिमतमतानुसारी वामनापि सदुपदेशात्प्राक्तनमज्ञानस्वभाव हंतुमुपरितननयमर्थज्ञानस्वभाव स्वीकर्तुं च य समर्थ आत्मा स एव शास्त्राधिकारीत्याह "न शास्त्रमसद्द्रव्येष्वर्थवत्" इति। तदेवमनेकांतात्मक वस्तु प्रमाणवाक्यविषयतया दर्यत्वेनावतिष्ठते। तथा च प्रयोग, सर्वमनेकांतात्मक, सत्त्वात्, यदुक्तसाध्य न तन्नोक्तसाधन यथा गगनारविंदमिति।

ननु यद्यप्यरविंद गगने नास्त्येव तथापि सरस्यस्तीति ततो न सत्त्वहेतुव्यावृत्तिश्चेत्तर्हि तदेतदरविंदमधिकरणविशेषापेक्षया सदसदात्मकमनेकांतमित्यन्वयदृष्टांतत्व भवतैव प्रतिपादितमिति सत्ताष्टव्यमायुष्मता। उदाहृतवाक्येनापि सम्यग्दर्शनज्ञानचारित्राणां मोक्षकारणत्वमेव न ससारकारणत्वमिति विषयविभागेन कारणाकारणात्मकत्व प्रतिपद्यते। सर्व वाक्य सावधारणमिति न्यायात्। एव प्रमाणसिद्ध मनेकांतात्मक वस्तु।

नया विभज्यते, ननु कोऽय नयो नाम? उच्यते। प्रमाणगृहीतार्थैकदेशग्राही प्रमातुरभिप्रायविशेषो नयो "नयो ज्ञातुरभिप्राय" इत्यभिधानात्। स नय संक्षेपेण द्वेधा द्रव्यार्थिकनय पर्यायार्थिकनयश्चेति। थिकनय द्रव्यपर्यायरूपमेकानेकात्मकमनेकांत

प्रमाणप्रतिपन्नमर्थं विभज्य पर्यायार्थिकनयविषयस्य भेदस्योपग-
मेनैतावस्थानमात्रमभ्युजानन् स्वविषयं द्रव्यमभेदेन व्यवहारयति
नयांतरविषयसापेक्षः सन्नय इत्यभिधानात् ।

यथा सुवर्णमानयेति । अत्र द्रव्यार्थिकनयाभिप्रायेण सुवर्ण-
द्रव्यानयनचोदनायां कटकं कुण्डलं केयूरं चोपनयन्नुपनेता
भवति, सुवर्णरूपेण कटकादीनां भेदाभावात् । द्रव्यार्थिकनयमुप-
सर्जनीकृत्य प्रवर्तमानं पर्यायार्थिकनयमवलम्ब्य कुण्डलमानयेत्युक्ते न
कटकादौ प्रवर्तते, कटकादिपर्यायस्य ततो भिन्नत्वात् । ततो द्रव्या-
र्थिकनयाभिप्रायेण सुवर्णं स्यादेकमेव । पर्यायार्थिकनयाभिप्रायेण
स्यादनेकमेव । क्रमेणोभयनयाभिप्रायेण स्यादेकमनेकं च ।

युगपदुभयनयाभिप्रायेण स्यादवक्तव्यं । युगपत्प्राप्तेन नयद्वयेन
विविक्तस्वरूपयोरेकत्वानेकत्वयोर्विमर्शाभावात् । न हि युगपदुपन-
तेन शब्दद्वयेन घटस्य प्रधानभूतयो रूपरसयोर्विविक्तस्वरूपयो
प्रतिपादनं शक्यं । तदेतदवक्तव्यस्वरूपं तत्तदभिप्रायैरेकत्वानेक-
त्वादिना समुच्चितं स्यादेकमवक्तव्यं, स्यादनेकमवक्तव्यं, स्यादेकाने-
कमवक्तव्यमिति स्यात् । सैषा स्याद्विनियोगपरिपाटी सप्तभङ्गीत्युच्य-
ते । भङ्गशब्दस्य वस्तुस्वरूपभेदवाचकत्वात् । सप्तानां भङ्गानां
समाहारः सप्तभङ्गीति सिद्धः ।

नन्वेकत्र वस्तुनि सप्तानां भङ्गानां कथं संभव इति चेत्, यथै-
कस्मिन् रूपवान् घटः रसवान् गन्धवान् स्पर्शवानिति पृथग् व्यवहार-
निबन्धना रूपत्वादिस्वरूपभेदाः संभवन्ति तथैवेति सन्तोष्टव्यमायुष्मता ।
एवमत्र परमद्रव्यार्थिकनयाभिप्रायविषयः परमद्रव्यसत्ता, तदपेक्षयैकमे-
वाद्वितीयं ब्रह्म नेह नानास्ति किंचन, सद्रूपेण चेतनानामचेतनानां
च भेदाभावात्, भेदे तु सद्विलक्षणत्वेन तेषामसत्त्वप्रसङ्गात् ।

ऋजुसूत्रनयस्तु परमपर्यायार्थिकः । स हि भूतत्वभविष्यत्वा-

न्यायपरापृष्ट शुद्धवर्तमानकालावच्छिन्न वस्तुरूप परामृशति । तन्नया-भिप्रायेण बौद्धाभिमतक्षणिकत्वसिद्धि । एते नयाभिप्राया सकल-सविषयांशोपात्मकमनेकांत प्रमाणविषय विभज्य व्यवहारयति ।

स्यादेकमेव द्रव्यात्मना वस्तु, नो नाना । स्यान्नानैव पर्याया त्मनो नैकमिति । तदेतत्प्रतिपादितमाचार्यसमतभद्रस्वामिभि "अ-नेकांतोऽप्यनेकांत प्रमाणनयसाधन । अनेकांत प्रमाणात्ते तदेका-तोर्पितान्नयात्॥१॥" इति । अनियतानेकधर्मवद्वस्तुविषयत्वात्प्रमाणस्य नियतैकधर्मवद्वस्तुविषयत्वाच्च नयस्य । यद्येनामार्हतीं सरणिमुल्लङ्घ्य सर्व-थैकमेवाद्वितीय ब्रह्म नेह नानास्ति किंचन, कथचिदपि नाना नेत्या-ग्रह स्यात्तदेतदर्थाभास । एतत्प्रतिपादकमतिवचनमागमाभास , प्र-त्यक्षेण सत्य भिदा तत्व भिदेत्यादिनागमेन च बाधितविषयत्वात् ।

सर्वथा भेद एव न कथचिदप्यभेद इत्यत्राप्येवमेव विज्ञेय, सद्रूपेणापि भेदेऽसत्त्व अर्थक्रियाकारित्वासभवात् । ननु प्रतिनियता-भिप्रायगोचरतया पृथगात्मनां परस्परसाहचर्यानपेक्षाणां मिथ्याभूता-नामेकत्वादीनां धर्माणां साहचर्यलक्षणसमुदायोऽपि मिथ्यैवेति चेत्त दगीकुर्महे, परस्परोपकार्योपकारकभाव विना स्वतन्त्रतया नैरपेक्ष्या-पेक्षाया पटस्वभावनिर्मुक्तस्य तंतुसमूहस्य शीतनिवारणाद्यर्थक्रियाव वैकल्यानेकत्वानामर्थक्रियाया सामर्थ्याभावात्कथंचिन्मिथ्यात्वस्यापि सभवात् । तदुक्तमीतमामासाया स्वामिसमंतभद्राचार्यैः ।

"मिथ्यासमूहो मिथ्याचेन्न मिथ्यैकांततास्ति न ।
निरपेक्षा नया मिथ्या सापेक्षा वस्तुतोऽर्थकृत् ॥१॥ इति ।

ततो नयप्रमाणाभ्यां वस्तुसिद्धिरिति सिद्ध सिद्धांत । इति पर्याप्तमागमप्रमाण ।

इति तृतीय प्रकाश. ।

इति श्री ... न्यायदीपिका

# नये नियम ।

सनातनजैनग्रंथमालामें सब ग्रंथ भाषाटीकासहित और चुन्नीलालजैनग्रंथमालामें केवल भाषा के छपेंगे । अब अंक न निकालकर पूरे ग्रंथ छपेंगे और १) के डिपाजिटका भेजकर पक्के ग्राहक बननेवालोंको ग्रंथ तैयार होतेही सनातनजैनग्रंथमालाके पौनी कीमतसे और चुन्नीलालजैनग्रंथमालाके आधी कीमतसे सब ग्रंथ वी पी द्वारा भेजते रहेंगे । अर्जेनी असमर्थ विद्वानविद्यार्थियोंको बिनामूल्य । पहिलेके छपे संस्कृत ग्रंथ भी पक्के ग्राहकोंको पौनी कीमतसे भेजे जायगे । और—

जो महाशय एकमुश्त १०) रुपये दान करके इस संस्थाके स्थायी सहायक बनेंगे, उन्हें अबसे छपनेवाले हर एक ग्रंथकी एक एक प्रति बिनामूल्य पोस्टेजमात्रके वी पी से भेजी जायगी ।

## विक्रयार्थ तैयार ग्रंथ ।

आप्तपरीक्षासटीक व पत्रपरीक्षा मूल २) समयप्राभृत दो संस्कृतटीकासहित ५) तत्त्वार्थराजवार्तिकपूर्वार्द्ध ५) उत्तरार्द्ध ५) पूर्ण ९) आप्तमीमांसाभाष्य टीका और प्रमाणपरीक्षासहित २) शब्दार्णवचंद्रिका (सटीक जैनेंद्रव्याकरण) ५) शब्दानुशासन (शाकटायनलघुवृत्ति) १ खंड २) जैनेंद्रप्रक्रिया पूज्यपाद गुणनंदि कृत १॥) शाकटायनधातुपाठ ।=) जिनशतक संस्कृत भाषा दो टीकासहित ॥) धर्मरत्नोद्योत दोहे चौपाई १) प्रश्नोत्तर (प्रश्नोत्तरश्रावकाचार) वचनिका २। महावीरचरित्र ~) न्यायदीपिका मूल ।) परीक्षामुख हिंदी और बंगानुवाद सहित ।) संस्कृतप्रवेशिनी छपरही है ।

पन्नालाल जैन महामंत्री भारतीयजैनसिद्धांतप्रकाशिनीसंस्था,
डि० मंदागिन जैनमंदिर पोष्ट-बनारस सिटी ।